अंतरंगत्वेनादौ प्रत्यये कार्य्यं नन्व सिद्धं वहिरंगमितिन्यायादंतरंगे एकारे क्रियमाणे वहिरंगोऽकारादेशोऽसिद्धः स्यादिति चेन्न नाजानंतर्य्ये वहिरंगत्व
प्रक्लृप्तिरिति प्रतिषेधात्॥ ॥ङसिरत् २ अत् विधानसामार्थ्यात्समानादित्यादि निर्द्देशात ङित प्रकरणात्वाद्वानुवृत्तेश्च विभक्तिस्वरेयस्य लोप इत्यलोप
भावः वावसाने इत्यत्र वा शब्दस्य व्यवस्थितार्थत्वाद्देवादित्यादौ तदभावः नामि १ नुट सहित आम् नाम् तस्मिन् अतो दरिडि नामित्यादौ दीर्घत्वाभावः क्विला
त् ४ कुश्च इलश्च क्विलं तस्मात् पृर्व्वौ णोऽनं ते इत्यतोऽनं ते इत्यनुवृत्ते र्हेरिस्त्रेत्यादौ षत्वाभावः सः षः इति वाच्ये विपरीत निर्द्देशान्नुम् विसर्ज्जनीय शस

ङसिरत् अकारात्परो ङसिरद्भवति दीर्घः देवात् देवाभ्यां देवेभ्यः षष्ठ्येकवचने देव ङस् इति स्थिते ङसस्य अकारात्परो ङस् स्य भवति
देवस्य षष्ठी द्विवचने देव ओस् इति स्थिते ओसि अकारस्य ओसि परे एत्वं भवति देवयोः नुडामः समानात्परस्यामो नुडागमो भवति टित्वा
दादौ टकार उच्चारणार्थः नामि नामि परे पूर्वस्य दीर्घो भवति देवानां सप्तम्येकवचने देव ङि इति स्थिते अइ ए देवे देवयोः पूर्ववत् सप्तमी वहु
वचने देव सुप् इति स्थिते पकारस्येत्संज्ञायां लोपः ए स्मि वहुत्वे किलात्सः सः कृतस्य कवर्गादिलाच्च प्रत्याहारादुत्तरस्य केनचित्सूत्रेण कृतस्य स
कारस्य षकारादेशो भवति देवेषु आमंत्रणे सिद्धिः आमंत्रणमाभिमुखीकरणं तस्मिन्नर्थे विहितः सिद्धि संज्ञो भवति समानाद्धेर्लोपो धातोः
समानादुत्तरस्य धेर्लोपो भवत्यधातोः आभिमुख्याभिव्यक्तये हे शब्दस्य प्राक्प्रयोगः हे देव हे देवौ हे देवाः एवं घट पट स्तंभ कुंभादयोप्यकारांताः

व्यवधाने षत्वम् हवींषि हविःषु हविष्षु इत्यादि नयासा तेः पदादेश्च सस्य षो नेति दधि सिंचति अग्निसादि १ पुल्लिंगाः अकारांता नामपि सर्वादीनां नु वि
त्यादि सिद्धिः आमंत्रणे २ लिंगार्थे प्रथमेत्यतोनंतरमिदं सूत्रं नत्वामंत्रणे इति योग विभागादामंत्रणे अभिमुखीकरणेर्थे प्रथमेति सिद्धिरित्यपरयोग विभागा
दामंत्रणार्थकः सिद्धि संज्ञक इत्यर्थः॥ ॥समानात् इति ४ द धात्पनेकानर्थो निति धातुर्यौगिको ज्ञेयः ततश्च धातोः समानादिति सामानाधिकरण्यं अने
कार्थात्समानादित्यर्थः। अतश्चासिम्सूत्रे ह्रस्व समानार्थे तावसेयानतश्च हे हाहाहे हूहूरित्यादावधातोरपि समानान्न हेः सोमप इति कुल्लविशेषणे एकदेश

प्रकृष्टाधीः प्रधीरितिनित्यस्त्रीत्वेनदीसंज्ञायांह्रस्वत्वेचहेप्रधिइत्यादौधातोरपिसमानाल्लोपःतथाऽस्मासोरस्येत्यत्रापिह्रस्वदीर्घसाधारणानुवृत्तेःसोमपमि
त्यादौधातोरपिनतथासोनःपुंसइत्यत्रकृताकारवर्ज्जह्रस्वदीर्घसाधारण्येनेति हाहानहूहूनवातप्रमीनइत्यादिप्रयोगाइत्यत्रचननतथानुडागमइत्यत्रपुं
नपुंसकयोर्ह्रस्वादेवस्त्रियांचनित्यस्त्रीलिंगानामीकारांतोकारांतानामावंनानांचदीर्घाद्पीनितनञ्सोमपानांकुलानामित्यादौधातोरपिसमानात्नुइकेचि
नुनात्पर्य्यज्ञानस्यशाब्दबोधहेतुत्वेनाधातुसमानपदयोस्तात्पर्य्यवशात्तादृशोर्थस्तत्रनतत्र कल्प्यइत्याहुः अकारांतत्वेनदेववत् प्राप्तावाह अकारान्तानाम
पीतिदेवशब्दात्कचिद्विशेषइत्यर्थः॥ ॥सर्वादिपठितयोरपित्वत् त्वशब्दयोश्छांदसत्वाल्लौकिकप्रयोगाभावादनुपादानम् उभशब्दस्यद्विवचना
नत्वात्सर्वादिकार्यासंभवेपिसर्वनाम्नस्तृतीयाचेतिसर्वनाम्नोहेतुप्रयोगेतृतीयाविधेरुभाभ्यांहेतुभ्यामित्यादिसिद्ध्यर्थमुपादानेऽन्यतरशब्दोऽव्युत्पन्न

सर्वविश्वउभउभयअन्यअन्यतरइतरडतरडतमकतरकतमसमसिमनेमएकपूर्वपरअवरदक्षिणउ १
त्तरअपरअधरस्वअंतरत्यद्तद्यद्एतद्इदम्अदस्द्विकिम्युष्मद्अस्मद्भवतुएतेसर्वादयस्त्रि
लिंगाःतत्रपुल्लिंगत्वेनरूपंनेयंजसीसर्वादेरकारांतात्परोजसईभवतिसर्वेःसर्वौसर्वेसर्वंसर्वौसर्वान्॥

एवनतुडतरांतःकिमृयत्तदृशएवतद्विधेःअतोडतरप्रत्ययांतत्वेनप्राप्तौपुनरुपादानादन्यतमस्यसर्वादित्वाभावइत्यसतत्समशब्दःसर्वपर्य्यायःनतुल्यार्थःए
वंसिमशब्दोपिनेमशब्दःखंडार्थःएषांचसर्वेषांनामानिसर्वनामानीत्यन्वर्थताविज्ञानात्सर्ववाचित्वेएवसर्वादिकार्य्यनसंज्ञागौणत्वयोः तथालोकान्पूर्वादीनां
स्वाभिधेयापेक्षावधिनियमेएवसंज्ञागौणत्वयोर्नेतिसर्वत्र अतोदक्षिणागाथकाइत्यादाववधिनियमाभावादुत्तराःकुरवइत्यादौसंज्ञात्वाचननतथाराद्धःसमायेत्या
दौतुल्यार्थत्वेनसमस्यापिननतथापरिधानवहिर्योगार्थस्यान्तरस्यापुरीवाचकस्येत्यंतरायांपुरीत्यादौनतथार्थःज्ञात्यन्यवाचिनएवस्वशब्दस्यनेहस्वापत्ता
तयेऽर्थायवातथावर्णाश्रमेतरेवर्णाश्रमेतराइत्यादौद्वंद्वेजसिवान्यत्रनतथातृतीयासमासतद्वाक्ययोरपिनेतिमासपूर्वायमासेनपूर्वायेत्यादितथावहुव्री
हिसमासावयवस्यप्रधानभूतस्यापिसर्वादित्वंनेतित्वंपितायस्याहंपितायस्यसत्वत्कपितृकोमत्कपितृकइत्यादिअन्यथाऽव्ययसर्वनाम्ना॥ २॥

मकच्प्राकूटेरित्यकचित्वकत्यितृकोमकत्यितृकइतिस्यात् दिक्समासेवहुव्रीहौचवेति उत्तरस्याः पूर्वस्याः अंतरालंदिक् उत्तरपूर्वातस्यै उत्तरपूर्वस्यै उत्तरपू
र्वायैइत्यादिप्रयोगानुसारतोयथायथमूह्यंजसीइति अत्रकेचित् मात्रालाघवेनवैयाकरणाः पुत्रोत्सवंमन्यंतइतिन्यायेनजसिइत्येवपेठुः दीर्घविधेःप्रयो
जनाभावात् नचदीर्घविधौद्विमात्रत्वेनगुरुत्वाद्गुरुःशिच्च सर्वस्यवक्तव्यइतिसर्वस्यजसःस्यादितिवाच्यंतस्यषष्ठीनिर्दिष्टस्यादेशस्तदंतस्यवक्तव्यइत्यंतवि
धेरपवादत्वात् अत्रचषष्ठीनिर्देशाभावान्निर्दिश्यमानस्यादेशाभवंतीतिसर्वस्यैवजसः स्यात् नचऔइत्युत्तरसूत्रेदीर्घकारानुक्तौकेचिन्मतेपूर्वविप्रतिषेधे
नादावीकारादेशोजरसादेशेचजरसीत्यादिसिद्ध्यर्थंदीर्घविधानमितिवाच्यम् कृताकृतप्रसंगित्वेनजरसादेशस्यनित्यत्वादादौसएवस्यात् केचिन्मतोपसंग्र
हार्थंधिरीत्यनंतरसूत्रएवदीर्घविधानौचित्यादाह अतएवधिरीत्येवकेचित्पठः कचिद्धौरीत्यपिसर्वत्रसूत्रपाठादौजसीइत्येवपाठइतिचेत् तथापिज

षुर्मेणोऽनंते षकाररेफऋवर्णेभ्यः परस्यनकारस्यणाकारादेशोभवति अंतेस्थितस्यनभवतिसर्वाणित्यादौ॥
अवकुप्वेऽन्तरेपि अवप्रत्याहारेणकवर्गेणपवर्गेणचमध्येव्यवधानेऽपिभवतिनान्येनसर्वेणसर्वाभ्यांसर्वैः॥

सिईइतिच्छेदः जसिइतिस्थानसप्तमी अन्येतुजस् इतिसांकेतिकंषष्ठ्यंतमेवेति अंतस्यैवप्राप्तौसर्वादेशार्थंगुरुकरणम् तदसत् गुरुःशिच्चसर्वस्ये
त्यत्रगुरुशब्दस्यानेकवर्णादेशोपलक्षकत्वस्यत्रेरयङित्यत्रङित्करणेनज्ञापनात् अन्यथादिव औइत्यादौकारादीनांद्विमात्रत्वेनगुरुत्वात्सर्वादेश
प्रसंगात्॥ःः॥ षुर्मेणइति ४ षश्चर्चऋश्च एषांसमाहारः ष्रृन तस्मात् ष्रृः अत्ररेफात्परस्यापिनस्यणत्वाकरणंसमानपदएवणत्वविधिज्ञापकं अ
वेति २ अवप्रत्याहारः कुः कवर्गः पुः पवर्गः एतैर्व्यस्तैः समस्तैर्वांतरेव्यवधानेपिपूर्वोक्तनिमित्तान्नस्यणत्वमित्यर्थः अपिशब्दोऽनुक्तस
मुच्चयार्थः तेनपर्याणद्धमित्यादौ आङ् पदव्यवधानेपिणत्वम् तथाच अनुस्वारविसर्जनीयः कः पव्यवधानेपिरिंगणांउरःकेणाउरः
॥ केणाउरः पेणाउरः पेणेत्यादि॥ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ॥

पू॰
सा॰टी॰
सा॰प्र॰
१४

सर्वादेः २ अत्र यद्यपि स्मटष्टित्वादकश्च किन्त्वाद्यंतस्थानत्वेनोभयोरविरोधस्तथापि ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्यायन क्रमित्युक्तेः कौण्डिन्यस्यापि
ब्राह्मणांतःपातित्वाद्दधिदाने प्राप्तेऽपि साक्षाच्छिष्टेन तक्रदानेन बाध्यते तथाऽत्रापि तक्रकौण्डिन्यन्यायेन सर्वादेः स्मडेव अत इति विभक्तिप्रकरणात्त्वादिभक्तेरेव
ततश्च सर्वमतानि सर्वान् इत्यादावतसातत्यगमन इत्यस्य क्विपि तल्लोपे सर्वादेः परस्यापि अतः स्मडभावः ङसिरदित्यतो मण्डूकप्लुत्या विभक्तिविपरिणामेन ङसे
रित्यनुवृत्तेर्वा सुडिति २ अत्र यद्यपि सामान्येन सर्वादिभ्यः सुड्विधौ सर्वादिगणांतर्वर्तिनोऽत्रानुक्तस्यापि भवच्छब्दस्य प्रसंगः अड्डीत्यतोऽदित्यनुवृत्तावावंता

सर्वादेः स्मट् सर्वादेरकारांतात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति सर्वस्मै सर्वाभ्यां सर्वेभ्यः पंचम्येकवचने सर्वङसिद्
इति स्थिते अतः सर्वादेः अकारांतात्परस्यातः स्मडागमो भवति सर्वस्मात् सर्वाभ्यां सर्वेभ्यः सर्वस्य सर्वयोः सुडामः सर्वादेः परस्यामः
सुडागमो भवति सर्वेषां ङिः स्मिन् सर्वादेरकारांतात्परो ङिः स्मिन् भवति सर्वस्मिन् सर्वयोः सर्वेषु एवं विश्वादीनामेकशब्दपर्यंतानां
रूपं ज्ञेयं डतरडतमौ विहाय तौ प्रत्ययौ न तु तदंताः शब्दा ग्राह्याः पूर्वादीनां तु नवानां जसि ईकारो वा वक्तव्यः पूर्वे पूर्वाः परे पराः इत्यादि ङसि
ङ्योः स्मात्स्मिनौ वा वक्तव्यौ पूर्वस्मात् पूर्वात् पूर्वस्मिन् पूर्वे इत्यादि प्रथमचरमतयाल्पार्द्धकतिपयनेमानां जसि ईकारो वा वक्तव्यः प्रथमे
प्रथमाः चरमे चरमाः शेषं देववत् तयायडौ प्रत्ययौ तीयस्य सर्वशब्दवद्रूपं ङित्सु वा वक्तव्यं द्वितीयस्मै द्वितीयाय द्वितीयस्मात् द्वितीयात् राम

नामप्रसंगस्तथाप्यावंतानां सुड्विध्यर्थं आपद इत्यनंतरसूत्रमनुवर्तनीयं अत्र आम इति लुप्तपंचम्यंतावर्णप्रश्ले ॥ द्वितीयस्मिन् द्वितीये एवं तृतीयः १४
षो वा विपरीतनिर्देशात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येति वायुवामित्यादौ सुट् न डतरडतमाविति न केवला प्रकृतिः प्रयो
क्तव्या न च केवलः प्रत्यय इति केवलयोस्तयोः प्रयोगासंभवात् प्रत्ययग्रहणे तदंतस्येति तदंतग्रहणमित्यर्थः प्रथमेति नेमशब्दस्य प्राप्तविभाषात्वाच्छे
षं सर्ववत् अन्येषां त्वप्राप्तत्वाद्देववत् त्रयीत्यादौ ङीवर्थं तयडयटौ संख्याया इत्ययटष्टित्वात्तयाडयडावित्यपपाठः ॥ छ छ छ छ छ ॥

उभयशब्दस्यायडतत्वेनविकल्पप्राप्तावपिसर्वादिषुसाक्षात्पाठादव्युत्पन्नत्वाद्वानित्यमेवअयटश्चावयवार्थकत्वादुभौअवयवौयस्येतिविग्रहेएकवचनान्तत्व
म् येषामितिचबहुवचनान्तत्वमद्वयोरवयविनोर्द्व्यवयवासम्भवादुभयशब्दस्यद्विवचनाभावआर्थिकः तीयस्यइतितीयप्रत्ययान्तप्रातिपदिकस्येत्यर्थःन
तस्यप्रातिपदिकग्रहणेलिंगविशिष्टस्यापिग्रहणमितिद्वितीयस्यैद्वितीयायैइत्याद्यपिसजातीयायेत्यादौतीयप्रत्ययान्तत्वाभावादर्थवद्ग्रहणेनानर्थकस्येतिवान्त

उभयशब्दोनित्यंद्विवचनांतः उभौ उभौ उभाभ्यां ३ उभयोः उभयोः उभयशब्दस्यद्विवचनाभावादेकवचनबहुवचनेभवतः उभयः उभये
उभयं उभयान् उभयेन उभयैः उभयस्मै उभयेभ्यः इत्यादि अकारांतः पुल्लिंगोमासशब्दः। मासस्याल्लोपोवा मासशब्दस्याकारस्यलोपोवा
भवति सर्वासुविभक्तिषुपरतः हसेपः सेर्लोपः हसांतादीवंताच्चपरस्यसेर्लोपोभवति माः मासः मासौ मासौ मासः मासाः मासं मासं मासौ
मासौ मासः मासान् मासा मासेनमाभ्यां मासाभ्यां माभिः मासैः मासेमासायमाभ्यां मासाभ्यांमाभ्यः मासेभ्यः मासः मासात् माभ्यां मासा
भ्यांमाभ्यः मासेभ्यः मासः मासस्यमासोः मासयोः मासांमासानांमासिमासेमासोः मासयोः मास्सुमासेषुहेमाः हेमास हेमासौ हेमासौ हेमा
सः हेमासाः आकारांतः पुल्लिंगः सोमपाशब्दः सोमपाः सोमपौ सोमपाः अधातोरितिविशेषणाद्दीर्लोपोनास्ति हे सोमपाः सोमपां सोमपौ
बहुवचनेसोमपाअस्इतिस्थिते आतोधातोर्लोपः धातुसंबंधिनआकारस्यलोपोभवतिशसादौस्वरेपरेसोमपः सोमपा सोमपाभ्यांसोम
पाभिः सोमपेसोमपाभ्यांसोमपाभ्यः सोमपः सोमपाभ्यांसोमपाभ्यः सोमपः सोमपोः सोमपाम् सोमपिसोमपयोः ॥ भावः मासस्येतिमासशब्दस्या

कारस्यवालोपोभवतिशसादौविभक्ताविति केचित्पाददन्तनासिकाहृदयनिशाअसृज्यूषदोषयकृत्शकृत्उदकआस्यशब्देभ्यः पद्दत्नस्हृद्निश्असन्यूषन्
यकन्शकन् उदन्आसन्नादयः शब्दाः पृथगेवलोकाद्वाशस्प्रभृतिष्वेषामेतेआदेशायथासंख्यमूह्याः लोपस्यादेशविशेषत्वात्षष्ठीनिर्दिष्टत्वादेवान्त्यस्याकारस्यसिद्धे
अधिकावर्णग्रहणस्याधिकार्थसिद्धेर्वीशब्दादेर्वार्थोऽवसेयः वसुतस्तुपदादयः पृथक्शब्दाएवैतन्मतेनानुपदादयः पृथक्शब्दाएव आतः इतितत्राऽधर्म्मेणपुनरुक्त्वा

क्वचिदिन्त्यर्थे कल्पनात् क्वः श्नद् इत्यादावप्यालोपः धातोः किं हाहान् क्विवतत्वाच्चास्य ॥ ॥ सोमपया शब्दस्य धातुत्वं तदुक्तम् शतृशानक्विवतानां क्वसं
तामातश्चैव चनृजतानीच धातूनां धातुत्वं नोपहन्यत इति धौतपरस्य तावन्मात्रग्राहकत्वात् सोमपयेन कुलेनेत्यादावप्रसंगः वस्तुतस्तु द्विमात्रोच्चारणसाम
र्थ्यादेव सवर्णानुपस्थितौ तदसत्तममेव १ सर्वविधिभ्यो लोपविधिर्बलवानिति धिलोपे पश्चात्प्रत्ययलोपे प्रत्ययलक्षणमिति तदाश्रयकार्य्यं ङस्य १ ङकारो
सोमपासु एवं कीलालपाः शंखध्माप्रभृतयः इकारांतः पुल्लिंगो हरिशब्दः प्रथमैकवचने हरिः औ पूर्व इकारांतादुकारांताच्च परऔ
यू आपद्यते ई ऊ भवतः हरी ए औ जसि इकारांतस्य उकारांतस्य च जसि परे एकारऔकारश्च भवति हरयः धौ इकारांतस्य उकारांतस्य
उकारांतस्य च धिविषये एकार औकारश्च भवति हे हरे हे हरी हे हरयः हरिं हरी हरीन् टा नास्त्रियां इकारांतादुकारांताच्च परष्टा ना भवत्यस्त्रियां
हरिणा हरिभ्यां हरिभिः ङि ति इकारांतस्य उकारांतस्य च ङिति परे एकारऔकारश्च भवति हरये हरिभ्यां हरिभ्यः ङसिङसोरस्य एदोद्भ्यां पर
स्य ङसिङसोरकारस्य लोपो भवति हरेः हरिभ्यां हरिभ्यः हरेः हर्योः हरीणां ङे रौ ङित् इदुद्भ्यामुत्तरस्य ङेरौ भवति स च ङित् ङिति दे ङिति परे देर्लो
पो भवति हरौ हर्योः हरिषु एवमग्निगिरिरविकविप्रभृतयः एतैरेव सूत्रैः सिद्ध्यंति उकारांताश्च विष्णुवायुभानुप्रभृतयः एतैरेव सूत्रैः सिद्ध्यंति।
भानुः भानू भानवः भानुं भानू भानून् भानुना भानभ्यां भानुभिः भानवे भानुभ्यां भानुभ्यः भानोः भानुभ्यां भानुभ्यः भानोः भान्वोः भानूनां भानौ भान्वोः राम
भानुषु हे भानो इत्यादि सखिशब्दस्य भेदः से डौ धेः सखिशब्दात्परस्य सेर्धेर्डा भवति स च ङित् ङित्वाट्टिलोपः सखा अधेरिति विशेषणादेकारो १५
धिविषये हे सखे ऐ सखुः सखिशब्दस्यैकारो भवति पंचसु परेषु षष्ठीनिर्दिष्टस्यादेशस्तदंतस्य ज्ञेयः द्विवचनस्यावाक्छंदसि द्विवचनस्य औ आ
पलक्षितो अः ङस्तस्य स च ङसोरेवेत्यभिप्रेत्योक्तं ङसिङसोरकारस्येति अधेरितीति ऐ सख्युरित्यत्राधेरित्यनुवृत्तेस्तस्य च विभक्तिविपरिणामेन सप्तमीबहुवचनांतत्वे
न धिवर्जितेषु पंचस्वित्यर्थादेकाराभावेपीत्यर्थः अन्यथैसख्युरित्यस्य दुर्वारत्वात् षष्ठीनिर्दिष्ट येति षष्ठ्या निर्दिष्टः षष्ठ्यंतत्वेनोद्दिष्टस्य यआदेशः स तस्यांतस्य स्यादित्य

सखायमित्यत्रपरत्वात्कृताकृतप्रसंगित्वेनानित्यत्वाच्चादादेकारेसमानत्वाभावान्नामघ्रासोरस्येत्यकारलोपः सखिपत्योएटाङ्योरित्यनष्टाङ्योरितिङेःइत्युन्नर
सूत्राच्चतस्यानुवृत्तेर्ङेः अपीत्यभिप्रेत्योक्तमूटाङेःङिःषुपरतइतिदीर्घत्वादितियद्यपिह्रस्वविधावपिकृताकृतप्रसंगित्वात्प्रथमंसवर्णदीर्घत्वेपिनानस्यातथापित
द्दीर्घेत्र्याग्नित्यत्वज्ञापनात्सप्तम्येकवचनेप्रथममौकारःसखिनावानरेंद्रेण अन्यत्रपतिनासहेत्याद्यार्षप्रयोगसिद्ध्यर्थमाह आगमजमिति आगमाञ्जाय
तेइति आगमजंतदनित्यमित्यर्थः अनित्यमागमानुशासनमितिपरिभाषयाइतिभावः ऋङेः२ अत्रयदिङेइतिचतुर्थ्येकवचनमभिप्रेतंस्यात्तर्हिङेःइत्यस्या

सखायौसखायःसखायंसखायौसखीन् सखिपत्योरीक्सखिपतिशब्दयोरीगागमोभवतिटाङेःङिःषुपरतःदीर्घत्वान्ननासख्याआ
गमजमनित्यंसखिनापतिनासखिभ्यांसखिभिःसख्येसखिभ्यांसखिभ्यःऋङेःसखिपतिशब्दयोर्ऋगागमोभवतिङसिङसोरकारेसच
ङित्सख्युःसखिभ्यांसखिभ्यःसख्युःसख्योःसखीनांसप्तम्येकवचनेङेःरौङित्यौकारेकृतेसखिपतिशब्दयोरीगागमोभवतिसख्यौसख्योः
सखिषुपतिशब्दस्यप्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रियातृतीयादौतुसखिशब्दवत्प्रक्रियापतिरसमासएवसखिवद्भक्तव्यः।ततःसमासांत
स्यनादयोभवंतिप्रजापतिनाप्रजापतयेइत्यादिद्विशब्दोनित्यद्विवचनांतःद्विऔइतिस्थितेत्यदादेष्टेःस्यादौत्यदादेष्टेरकारोभवतिस्यादौपरे
द्वौद्वौद्वाभ्यांद्वाभ्यांद्वयोःद्वयोःत्यदादीनांघेरभावःत्रिशब्दोनित्यंबहुवचनांतःत्रिजसइतिस्थितेत्रयःत्रीन्त्रिभिःत्रिभ्यःत्रिभ्यःत्रेरयङ्त्रिशब्द
तुनेरेवपुनर्ग्रहणंनकुर्यात्तस्मात्ङकारोपलक्षितःअःङःतस्मिन्ङेइत्यभिप्रेत्याहङसिङसोरकारइतिऋतः३नपरक॥स्यायङादेशोभवतिनामिपरे॥
रणोनतावन्मात्रस्यैवग्रहणाद्धुन्व्योर्ग्रेइत्यादौगृह्णइत्येनस्मादीर्घोदुत्वाभावःऋङेःइत्यत्रह्रस्वोवेत्यतोवानुकर्षणाल्लोकाच्चखीनीशब्दाभ्यानपिक्वक्ततस्वसुख
मात्मनइच्छतिसुखीयतिसुखीयतीतिसुखीःतस्यसुख्युःएवंसुतमात्मनइच्छतिसुतीयतिसुतीयतीतिसुतीःतस्यसुत्युःतथासहखेनवर्ततेइतिसखःतमि
च्छतीतिसखीःतस्यसख्युःतकारस्यानजाद्दर्णादपीष्यतेलूनमिच्छतिलूनीयतिलूनीयतीतिलूनीःतस्यलून्युःवेतिकेचित्सुख्यःसुत्यःसख्यः॥ ६ ७ ६॥

ह्रस्वः ननु सखिशब्दस्य सप्तम्येकवचने आदावौ गोणमे दीर्घत्वादौत्वाभावः आदावौत्वे टिलोपे च एकदेशविकृतन्यायेन ईगागमे नैमित्तिकस्याप्यभाव इति
न्यायेनौत्वनिवृत्तिः स्यादित्यतो निमित्ताभावन्यायस्यानित्यत्वमभिप्रेत्याह सप्तम्येकवचने इति · अयं भावः औत्वस्य ङित्त्वाट्टिलोपे निमित्तयोरिदुतोरभा॰
वेन सर्वत्रौत्वनिवृत्त्यापत्त्या तद्विधिवैयर्थ्यापातादनित्यत्वं न्यायस्यावसीयते लोकेपि निमित्तदण्डाद्यभावे घटाद्यनपायदर्शनाच्च · शोभनः सखा सुसखे॰
त्यादौ समासेपि सखिशब्दप्राधान्येपं च सु तत्कार्यदर्शनादन्यत्र सुसखिनाहृतं अतिसखे रागच्छतीत्यादौ तत्कार्याभावः पतिरसमास एवेति सखिवदि
त्यनेन सखिशब्दस्यासमासस्यैवेगादिकार्यं यथा तथा तत्सहोक्तस्य पतिशब्दस्यापीत्यर्थः अन्यथा सखिकार्यातिदेशे ङादेरपि प्रसंगस्स्यात् हरिशब्दादि
वत्याशिकद्विवचनान्तत्वे सिद्धे वचनारंभसामर्थ्यान्नित्यद्विवचनान्तत्वं प्राप्नोतीत्यग्रहणं स्पष्टार्थमत्यदादेः ४ त्यशब्देनैकदेशेन समुदायोपलक्षणा
त्त्यदः आदिर्येस्येति तद्गुणसंविज्ञानो बहुव्रीहिः नन्वस्य त्यदादित्वाद्दस्य मइतिमः स्यादिति चेन्न सत्यं क्रुङुः इत्यादाविवात्रापि दकारसहिताकारस्यम

ङिः दंतस्य वक्तव्यः त्रयाणां त्रिषु कतिशब्दो नित्यं बहुवचनान्तः जस्शसोर्लुक् कतिशब्दाज्जश्शसोर्लुग्वक्तव्यः लुकि न तन्निमि
त्तं कति कति कतिभिः कतिभ्यः कतिभ्यः कतीनां कतिषु त्रिषु लिंगेषु चायं सरूपः ईकारान्तः पुल्लिंगः सुश्रीशब्दः ॥ १७१ ॥

कारसहिताकारविधेरत्र चवकारयुक्तत्वात्तदभावः त्रेरिति २ त्रिशब्दस्य बहुवचनान्तत्वेपि शब्दनिर्देशादत्रैकवचनम् अनेकवर्णादेशत्वेन गुरु
त्वात्सर्वस्य प्राप्तावाह ङिः दंतस्येति · गौणत्वे तु प्रियत्रीणामित्येव कतिशब्दादिति कासंख्याये ऽऽषामिति · शेषाणि पात्याः कत्यादयः इति डत्यंतत्वे
न निपातितात्कतिशब्दात् डतेश्चेति सूत्रेण जस्शसोर्लुगित्यर्थः सूत्रे चरः संख्याया इत्यतः संख्याया इत्यनुवृत्तेः संख्यार्थात् डत्यन्तादित्यर्थात् डत्यं॰
तादित्यर्थावगमात्पातेर्डतिरिति डत्यंतादपि पतिशब्दन्न लुक् अत एव पतितेनागणाघीणी पतितेनागवेदनाइत्यादौ या संख्या येषां पतिसा संख्याये
षां तदीत्यादावपि संख्यार्थडत्यन्तत्वाज्जश्शसोर्लुक् लुकि न तन्निमित्तमित्येकागभावः त्रिषु चायं सरूप इति वाच्यलिंगत्वेन त्रिलिंगत्वम् बहुवचनान्त
त्वेन बहुवचनाभावादिकृतविशेषाभावात्सरूपत्वं समानरूपत्वमित्यर्थः ॥ १७२ ॥

अयमित्युपलक्षणं पंचन्प्रभृतीनां तथोक्तमक्ष्णां न संख्याव्ययडतियुष्मदस्मत्सदकृत्रिष्विति ॥ ॥ य्वोः ४ अत्र यद्यपि य्वोरिति ह्रस्वदीर्घसाधारणं तथापि ह्रस्वेकारो
कारांतक्विवंतधातुप्रयोगाभावादीकारोकारयोरित्युक्तम् अत एवनुधातोरित्यत्रेत एवानुवर्तमानं य्वोरिति धातोश्चेवर्णोवर्णयोरिति साधारण्येनाभिधास्यति अमिश्र

य्वोर्धीनोरिपुवौ स्वरे धातोरीकारोकारयोरियुवौ भवतः स्वरे परे सुश्रीः सुश्रियौ सुश्रियः हे सुश्रीः हे सुश्रियौ हे सुश्रियः सुश्रियं सुश्रियौ सु
श्रियः सुश्रिया सुश्रीभ्यां सुश्रीभिः सुश्रिये सुश्रीभ्यां सुश्रीभ्यः सुश्रियः सुश्रीभ्यां सुश्रीभ्यः सुश्रियः सुश्रियोः सुश्रियां सुश्रियि सुश्रि
योः सुश्रीषु एवं सुधीशब्दः ऊकारांतपुल्लिंगः स्वयंभूशब्दः स्वयंभूः स्वयंभुवौ स्वयंभुवः स्वयंभुवम् स्वयंभुवौ स्वयंभुवः स्वयंभुवा स्वयंभूभ्यां
स्वयंभूभिः स्वयंभुवे स्वयंभूभ्यां स्वयंभूभ्यः स्वयंभुवः स्वयंभूभ्यां स्वयंभूभ्यः स्वयंभुवः स्वयंभुवोः स्वयंभुवां स्वयंभुवि स्वयंभुवोः स्वयंभूषु से
नानीशब्दस्याविशेषो हसादौ स्वरादौ तु विशेषः सेनानी ओ इ तिस्थिते य्वो वा धातोरवयवसंयोगः पूर्वो यस्मादीकारादूकारान्नास्ति तदंतस्या
नेकस्वरस्य ईकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा वाग्रहणादियं विव १
क्षा सेनानीः सेनान्यौ सेनान्यः हे सेनानीः हे सेनान्यौ हे सेनान्यः सेनान्यं सेनान्यौ सेनान्यः सेनान्या सेनानीभ्यां सेनानीभिः सेनान्यै सेनानीभ्यां
सेनानीभ्यः सेनान्यः सेनानीभ्यां सेनानीभ्यः सेनान्यः सेनान्योः सेनान्यादीनां वा मोनुट् वक्तव्यः सेनान्यां सेनानीनां आम्ङेः आबंतादीवंतान्नी
शब्दाच्चोत्तरस्य ङे रामादेशो भवति सेनान्यां सेनान्योः सेनानीषु वातप्रमीशब्दस्य भेदः वातप्रमीः वातप्रम्यौ वातप्रम्यः हे वातप्रमीः हे वातप्रम्यौ
हे वातप्रम्यः वातप्रमीं वातप्रम्यौ वातप्रमीन् वातप्रम्या वातप्रमीभ्यां वातप्रमीभिः वातप्रम्ये वातप्रमीभ्यां वातप्रमीभ्यः वातप्रम्यः वातप्रमीभ्यां
वातप्रमीभ्यः वातप्रम्यः वातप्रम्योः आमि नुट् वातप्रमीनां ङेनुसवर्णो दीर्घः वातप्रमी वातप्रम्योः वातप्रमीषु एवं ग्रामणीप्रभृतयः ॥ ६ ॥
सिच परत्वादियुवावेव विभक्तिप्रकरणत्वाद्विभक्तिस्वरे एव नश्र्यर्थमित्यादौ ईकारांतमध्येपि स्वयंभूशब्दस्य उवाप्रसंगादुक्तिः य्वो वा २ धातोरवयवे मेः सं
योगः स यस्मादीकारादुकारात्पूर्वो नास्ति ॥

पू

सा.टी. तैर्यातौःईकारोकारौअन्तेयस्यसएवंविधोयोऽनेकस्वरःशब्दस्तस्ययावीकारोकारौतयोर्यकारवकारौभवतइत्यर्थःवर्षाभूपुनर्भूभ्यामतिरिक्तोऽन्योयोभूश
सा.प्र. ब्दःसुधीशब्दश्चतंवर्जयित्वाकेवलभूशब्दस्यानेकस्वरत्वाभावादेवाप्राप्तेस्तदन्तप्राप्तौप्रतिषेधःएवंविधेनियामकापेक्षायामाहवाग्रहणादितिवाशब्द
२७ स्यव्यवस्थितविकल्पार्थत्वादित्यर्थःविवक्षैत्यनेनप्रयोगानुसारतोयथेष्टंव्यवस्थाविज्ञानात्हम्भूकाराभूभ्यामप्यन्यस्येत्यवसेयम्‌तथागतिकारकेतरपूर्व
स्येवनेहशुद्धधियोपरमधियोगतिसंज्ञाचगतिश्चेत्यादिनालोकतोऽवगंतव्याउन्नाविन्यादावुपसर्गधात्ववयवयोःसंयोगान्तत्वान्ननिषेधः॥ ॥सेनानीनाम

सेनानीवत्‌ऊकारांताश्चयवलूप्रभृतयःऋकारांतपुल्लिंगःपितृशब्दःसेराऋकारांतानाम्यरस्यसेराभवतिसचडित्‌डित्वाट्टेर्लोपःपिताअ
पंचसुऋकारोऽर्भवतिपंचसुपरेषुसचडित्‌हेपितःहेपितरौहेपितरःपितरंपितरौपितॄन्‌पित्रापितृभ्यांपितृभिःपित्रेपितृभ्यांपितृभ्यःपि
तुःपितृभ्यांपितृभ्यःपितुःपित्रोःपितॄणांडौऋकारस्यार्भवतिडौपरेपितरिपित्रोःपितृषुएवंजामातृभ्रात्रादयःनृशब्दःनानरौनरःनरंनरौ
नॄन्‌न्रानृभ्यांनृभिःन्रेनृभ्यांनृभ्यःनुःनृभ्यांनृभ्यःनुःन्रोःनुर्वानामितिदीर्घेनृशब्दस्यनामिपरेवादीर्घोभवतिनृणांनरिन्रोःनृषुहेनःहेनरौ
हेनरःकर्तृशब्दस्यपंचसुविशेषःस्तुरार्सकारस्तृप्रत्ययसंबंधिनऋकारस्याआर्भवतिपंचसुपरेषुकर्तृसिद्धिइतिस्थितेयदादेशस्तद्वद्भवति
सेराडित्वाट्टेर्लोपःकर्ताकर्तारौकर्तारःहेकर्तःहेकर्तारौहेकर्तारःकर्तारंकर्तारौकर्तॄन्‌कर्त्राकर्तृभ्यांकर्तृभिःकर्त्रेकर्तृभ्यांकर्तृभ्यःकर्तुः
कर्तृभ्यांकर्तृभ्यःकर्तुःकर्त्रोःकर्तॄणांकर्तरिकर्त्रोःकर्तृषुएवंनप्तृहोतृप्रशास्तृप्रभृतयः॥१॥हंस्कंदइत्याद्यार्षप्रयोगार्थमाहसेनान्यादीनामि राम
तिछंदस्येवआदिशब्दात्‌गोमित्याद्यपिस्त्राम्डेः२अत्रापःनियश्चेत्यनुवर्ततेयःसेराअत्रयद्यपिपरत्वात्‌संचस्वित्यरप्राप्नोतितथापिनल्लोपसंभवान्निरवकाश २७
त्वाच्चआएवपंचसु१कर्तृणिकुलइत्यादौपरत्वान्नुमावाधनात्प्रसंगःनृणामेकोगम्यस्त्वमसिपयसामर्णवइवेत्यादिप्रयोगसिद्ध्यर्थमाह।नुर्वेतिःनृशब्दस्यना
मिपरत्वादीर्घइत्यर्थःनुर्वेतिसूत्रमर्थतोव्याख्यातमस्तुः२स्तृचतृश्चस्तस्यसुःआगमानुशासनस्यानित्यत्वान्नुमभावःलिंगवचनव्यत्ययौवाऋतोडउरित्यत॥

इत्यवधृते स्तस्य च तपरत्वात्तावन्मात्रग्रहणे तिस्रः चतस्रः प्रियतिस्रौ प्रियचतस्रावित्यादौ ऋकारस्य ऋकारातिदेशान्नाप्तं नश्च सकारसंबंधी स्वसृशब्दस्य ऋकार ॥५॥ ॥उकारान्तस्यापीति पंचस्वित्यस्य शेरप्युपलक्षणत्वात्प्रियक्रोष्टृणामित्यादि शसि तृप्रत्ययवद्भावाभावादति प्रत्ययवद्भावस्याभावस्तस्मात् पंचसु तृप्रत्ययवद्भावो विधीयते तृतीयादौ स्वरादौ च वेत्यवशिष्टे शसि तदभाव इत्यर्थः ननु क्रोष्टूनामित्यत्र कथं पक्षे तृप्रत्ययांतत्वाभाव इत्यत आह कृताकृतप्रसंगी

उकारान्तस्य क्रोष्टुशब्दस्य भेदः उकारांतस्यापि क्रोष्टुशब्दस्य पंचस्वधिषु तृप्रत्ययांतस्येव रूपं वक्तव्यं क्रोष्टा क्रोष्टारौ क्रोष्टारः क्रोष्टारं क्रोष्टारौ शसि तृप्रत्ययांतवद्भावाभावात् क्रोष्टून् तृतीयादौ स्वरादौ तृप्रत्ययांतना वक्तव्या क्रोष्ट्रा क्रोष्टुना क्रोष्टुभ्यां क्रोष्टुभिः क्रोष्ट्रे क्रोष्टवे क्रोष्टुभ्यः क्रोष्टुः क्रोष्टोः क्रोष्टुभ्यां क्रोष्टुभ्यः क्रोष्टुः क्रोष्टोः क्रोष्ट्रोः क्रोष्ट्वोः क्रोष्टूनां नुडागमे कृते नेह सादित्वात्तद्वद्भावो नास्ति कृताकृतप्रसंगी यो विधिः स नित्यः नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् क्रोष्टरि क्रोष्टौ क्रोष्ट्रोः क्रोष्ट्वोः क्रोष्टुषु ऋकारांता ऌकारांता एकारांताश्चाप्रसिद्धाः ऐकारांतः पुल्लिंगः सुरैशब्दः रैस्मि रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परतः सुराः स्वरादौ सर्वत्रायादेशः सुरायौ सुरायः हे सुराः हे सुरायौ हे सुरायः सुरायं सुरायौ सुरायः सुराया सुराभ्यां सुराभिरित्यादि ओकारांतः पुल्लिंगो गोशब्दः ओरौ ओकारस्यौकारादेशो भवति पंचसु परेषु गौः गावौ गावः हे गौः हे गावौ हे गावः आ मूशसि ओकारस्यात्वं भवति अमि शसि च परे गां गावौ गाः गवा गोभ्यां गोभिः गवे गोभ्यां गोभ्यः ङसि स्यकारलोपः गोः गोभ्यां गोभ्यः गोः गवोः गवां गवि गवोः गोषु एवं सुद्योशब्दः ग्लौशब्दस्य हसादावविशेषः स्वरादावावादेशः ग्लौः ग्लावौ ग्लावः ग्लावं ग्लावौ ग्लावः ग्लावा ग्लौभ्यामित्यादि ॥ ५ ॥

नित्यः कृतेपि प्रसज्यते अकृतेपि स विधिर्नित्य इत्यर्थः नित्यानित्ययोर्नित्यो विधिर्बलवानिति स। एवं यदागमास्तद्ग्रहणेन गृह्यंत इति हसादित्वमत्र ऋकारांता इत्यादि यद्यपि कर्दे वावितिकेप्याहुर्द्वयोर्निप्रसृस्वलः एर्विसुरित्यादौ ऋकारादयो दृश्यंते तथापि तदेनात्र प्रसिद्धा एवं एतेपि प्रचुरप्रयोगाभावान्नोक्ताः रै र स च भूश्च स्मृतस्मिन् स्मिरे इति सांकेतिकषष्ठ्यंतत्वात्षष्ठीनिर्दिष्टस्येत्यंतस्य अथवा रादयः एरे इति षष्ठीतत्पु

यलोपेवसंधिरार्षः रैशब्दस्यैकारस्त्राभवतीत्यर्थः त्राम् शसि त्राः त्रम् शसिसमानपदस्थकृनाकारवर्ज्जपरत्वव्याख्यानाज्ञाद्इत्यत्रनत्वाप्रसंगः॥ःइतिसार
स्वतप्रसादेस्वरांताः पुल्लिंगाः आपः त्रारूपः आप् त्राप्तस्मात् तदंतादित्यर्थः ततश्चखट्वामति क्रांतोतिखट्वः अतिखट्वेनेत्यादावेकदेशविकृतस्यानन्यत्वा

इतिस्वरांताः पुल्लिंगाः अथस्वरांताः स्त्रीलिंगाः प्रदर्श्यंतेतत्राबंतोगंगाशब्दः त्राबंतस्त्रियाम् त्रकारान्तान्नाम्नः स्त्रियांवर्तमाना
दाप्प्रत्ययोभवति आपः आबंतात्परस्यसेर्लोपोभवति गंगा त्रौरी त्राबंतात्परत्रौ ईकारमापद्यते त्रइएगंगेगंगाः धिरिः त्राबंतात्परोधि
रिर्भवति हेगंगे त्रंबादीनांधौह्रस्वः त्रंबादीनांधौपरे ह्रस्वोभवति हे त्रंब हे त्रक्क हे त्रल्ल त्रसंयुक्तानांडलकवतीनांप्रतिषेधोवाच्यः हे त्रं
बाडे हे त्रंबाले हे त्रंबिके इत्यादौ ह्रस्वो न भवति गंगां गंगेगंगाः टौसोरे त्राबंतस्यटौसोः परयोरेत्वंभवति त्रयादेशः गंगयागंगाभ्यांगंगाभिः
ङितांयट् त्राबंतात्परेषांङे ङसि ङस् ङि इत्येतेषांयडागमोभवति गंगायैगंगयोः गंगासु एवं त्रद्धामेधाशालामालाहेलादोलाप्रभृतयः
सर्वादीनांतुङितांविशेषः यटोऽच्च त्राबंतात्सर्वादेः परस्ययटः सुडागमोभवति पूर्वस्यचापोकारोभवति सर्वस्यैसर्वाभ्यांसर्वाभ्यः सर्वे
स्याः सर्वाभ्यांसर्वाभ्यः सर्वस्याः सर्वयोः सर्वासांसर्वस्यांसर्वयोः सर्वासु आकारांतोजराशब्दः जरायाः स्वरादौजरसवावक्तव्यः जराजरसौज
रेजरसः जराः जरसंजरांजरसौजरेजरसः जराः जरसाजरयाजराभ्यांजराभिः जरसेजरायैजराभ्यांजराभ्यः जरसः जरायाः जराभ्यांजराभ्यः ज
रसः जरायाः जरसोः जरयोः जरसांजराणांजरसिजरायांजरसोः जरयोः जरासु हे जरे हे जरसौ हे जरे हे जरसः हे जराः इकारांतः स्त्रीलिंगो
बुद्धिशब्दः तस्यचप्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया बुद्धिः बुद्धीबुद्धयः बुद्धिंबुद्धीबुद्धीः स्त्रीत्वाच्छसोनत्वाभावः बुद्ध्याबुद्धिभ्यांबुद्धिभिः

दाबंतत्वेपितत्कार्याभावः अंबादीनामित्यत्रादिशब्देनमात्रर्थेकाक्काल्लेत्यादिसंग्रहः अंबिकादीनांतु त्रंबादिभ्योभिन्नत्वात्तदप्रसंगः ङितामङ इतपेषांतेङितस्तेषा
मित्यभिप्रेत्याह ङे ङसीत्यादिदेशनियमार्थः जरायाइत्यत्रतदंतविधेरिष्टत्वादेकदेशविकारेपिनिर्जराः जरशब्दयोः पुंनपुंसकयोरपिजरसवक्तव्यत्वाद्धाशब्दाद्धाहंज्

१८

इदुद्भ्याम् १ वेयुवइत्यतोवानुवृत्तेर्नित्यस्त्रीलिंगानामेवनानियतलिंगानांशुचिमृदुपटुप्रभृतीनांशाकटायनास्त्वेषामपीच्छंतिस्त्रीयांय्वोरितिविगृह्यव्याच
ष्टेइस्वउस्वेतितुमभावस्यानित्यत्वात्व्यत्ययोवात्रत्रापिनित्यस्त्रीलिंगयारित्येवअडागमाभावेआमोप्यभावइत्यर्थःहसेपः२हसस्वईपचहसेप्तस्मात्लध्वस्य
रत्वात्पूर्वेणत्वसौत्रत्वात्रापिईरूपःईपईपइतिविवक्षयानिष्क्रांतःकौशांव्यानिःकौशांबिरित्यादेःसिलोपाभावःयद्यपिहसांनात्संयोगांतलोपेनापिसिद्धिस्तथापि

इदुद्भ्याम् स्त्रियांवर्त्तमानाभ्यांमिकारोकाराभ्यांपरेषांङितांवचनानांवाअडागमोभवतिबुद्ध्यैबुद्धयेबुद्धिभ्यांबुद्धिभ्यःबुद्ध्याःबुद्धेःबुद्धि
भ्यांबुद्धिभ्यःबुद्ध्याःबुद्धेःबुद्ध्योःबुद्धीनांस्त्रियांय्वोःइस्वउस्वयूतस्मात् इवर्णान्तादुवर्णांताच्चपरस्यङेःरामादेशोभावतिबुद्ध्यांअडागमाभा
वेआमोप्यभावःबुद्धौबुद्ध्योःबुद्धिषुएवंमतिभूतियुतिरुचिहतिसिद्धिशांतिभ्रांतिश्रालिशक्तिप्रभृतयःएवंधेनुरज्जुप्रभृतयःस्त्रीलिंगाः
धेनुःधेनूधेनवःधेनुंधेनूधेनूःधेन्वाधेनुभ्यांधेनुभिःधेन्वैधेनवेधेनुभ्यांधेनुभ्यःधेन्वाःधेनोःधेनुभ्यांधेनुभ्यःधेन्वाःधेनोःधेन्वोःधेनूनां
धेनौधेन्वांधेनुषुईकारांतःस्त्रीलिंगोनदीशब्दःहसेपःसेर्लोपःहसांतादीवंताच्चपरस्यसेर्लोपोभवतिनदीनद्यौनद्यःधौह्रस्वःईवर्णोव
वर्णयोस्थानोःस्त्रियांधौपरेह्रस्वोभवतिहेनदिहेनद्यौहेनद्यःनदीम्नद्यौनदीःनद्यानदीभ्यांनदीभिःङितामट्स्त्रियामीकारांतादूकारांता॰
च्चपरेषांङितांवचनानामडागमोभवतिनद्यैनदीभ्यांनदीभ्यःनद्याःनद्योःनदीनांनद्यांनद्योःनदीषुएवंगौरीसरस्वतीब्राह्मणीकुमारीकिशो
रीकलभीप्रभृतयःलक्ष्मीशब्दस्येवंतत्वाभावात्सेर्लोपोनास्तिलक्ष्मीःलक्ष्म्यौलक्ष्म्यःशेषंनदीवत्हेलक्ष्मिस्त्रीशब्दस्यईवंतत्वात्सेर्लोपो

ककलौल्येइत्यादीनांककारांतानांक्विपिस्कोरादेश्वेतिविशेषस्यकलोपविधेःप्रसंगेनानिष्टंस्यात्धौ२वेयुवइत्यतोवानुकर्षणान्नित्यस्त्रीलिंगानांस्त्री
वर्ज्जमनिपुंवंगानामितिव्यवस्थावसेयात्रधातोरितितुअनियुवंतोपलक्षणार्थंअन्ययाप्रकृष्टाधीःप्रधीरितिनित्यस्त्रीत्वेप्रधीशब्देकारस्यधातोर्ह्र
स्वतानस्यात्इयुवंतत्वाच्चहेश्रीःहेभ्रूरित्यादौनह्रस्वत्वम् विमाननासुभ्रुकुतःपितुर्गृहइत्यादिप्रयोगाद्धौसुभ्रूःस्त्रीवदिनिह्रस्वं॥ २७६७२॥

पू॰

सा॰टी॰ इतिकेचित्तन्नतुह्रस्वत्वेइकारांतत्वाद्धावितिस्यादितिचेत्सत्यमेवेयुवइत्यतोवानुवृत्तेर्व्यवस्थयानह्रस्वविधानसामर्थ्याच्चअन्यथाएज्जोइत्येवंकुर्यात्स्त्रि
सा॰प्र॰ यांप्वोरित्यतोह्रस्वदीर्घसाधारणानुवृत्तेरिवर्णोवर्णयोरित्युक्तमङितां २ यद्यपिस्त्रियांप्वोरित्यतोह्रस्वदीर्घसाधारणानुवृत्तिस्तथापीदुद्भ्यामित्यनेनह्रस्वाभ्यां
१९ विकल्पेनविधानात्परिशेषादीकारांतादूकारांतादेवेत्युक्तम् अत्रापिनित्यस्त्रीलिंगानामित्यर्थावसायात्सुनद्येभूम्नेइत्यादावडभावः लक्ष्मीशब्दस्येतिलक्ष्मीः॰
मुट्ठैतीप्रत्ययांतत्वादित्यर्थः तदुक्तम् अवीलक्ष्मीतरीतंत्रीह्रीधीश्रीणामुणादितः सप्तानामपिशब्दानांसिलोपोनकदाचनेति स्त्रीशब्दस्येतिस्त्यायतेः स्त्रान्वे
ड्रट्इतिड्रटिटित्वादीबित्यर्थः ॥ ॥ स्त्रीभ्रुवोः १ भ्रमुअनवस्थानेअस्मात्ड्रप्रत्ययेधातोरुवर्णाभावादुवङप्राप्तावारम्भः वाम्शसीत्यत्रयद्यपिस्त्रीभ्रुवोरित्यतएकयो

स्त्रीभ्रुवोः स्त्रीशब्दस्यभ्रूशब्दस्यचइयुवौभवतःस्वरे स्त्रियौ स्त्रियः हे स्त्रि हे स्त्रियौ हे स्त्रियः वाम्शसि स्त्रीशब्दस्य अमि शसि च परे वाइ
यादेशोभवति स्त्रियंस्त्रींस्त्रियौस्त्रीःस्त्रियः स्त्रिया स्त्रीभ्यां स्त्रीभिः स्त्रीषु शेषंनदीवत् श्रीः श्रियौ श्रियः श्रियं श्रियौ श्रियः श्रिया श्रीभ्यां श्री
भिः वेयुवः इयुवंतात् स्त्रियांवर्तमानान्ङितांवचनानांवाडागमोभवति स्त्रियास्तुनित्यं श्रियै श्रिये श्रीभ्यां श्रीभ्यः श्रियः श्रियाः श्रीभ्यां श्री
भ्यः श्रियः श्रियाः श्रियोः श्र्यादीनांवामोनुड्वक्तव्यः श्रियां श्रीणां ङेःपरेऽडागमाभावे आमोऽप्यभावः श्रियां श्रियोः श्रीषु हे श्रीः एवं ह्रीधीप्रभृतयो
प्यनीवंताः एवंभ्रूशब्दोभ्रूशब्दवत् वधूजम्बादीनांनदीशब्दवत् वधूः वध्वौ वध्वः वधूं वध्वौ वधूः जंबूः जंब्वौ जंब्वः हे जंबु हे जंब्वौ हे जंब्वः ऋकारां
तोमातृशब्दः माता मातरौ मातरः मातरं मातरौ मातॄः शसीतिदीर्घत्वंशेषंपितृवत् रैशब्दः सुरैशब्दवत् नौशब्दोग्लौशब्दवत् गोशब्दस्तुपूर्ववत् ॥ राम

गनिर्दिष्टानांसद्भवाप्रवृत्तिःस्तद्भवानिवृत्तिरितिभ्रूशब्दस्याप्यनुवृत्तिस्तथापिवाशब्दव्यवस्थयानास्यविकल्पः वेयुवइत्यत्रवाशब्दस्यव्यवस्थितार्थत्वेन १९
स्त्रीशब्दस्येयंतत्वेपिअटोविकल्पाभावान्नित्यमदिशेषंनदीवदित्युक्तमेवेयुवः २ इयुच उवच इयुव् तस्मात्येनविधिस्तदंतस्येतिइयुवंतादित्युक्तम् अ
त्रापिनित्यस्त्रिलिंगनियमात्तुश्रियेनद्येइत्यादावट्प्रसंगः श्र्यादीनामित्यत्रश्रीशब्दस्यप्रकारवाचित्वान्नित्यस्त्रीलिंगानांस्त्रीवर्ज्जमिपुंवंतानामुपादा॰

॥ नांद्रीनांभ्रूणामि ॥

न्यादिसिद्धिः कुमारीमात्मनइच्छतिकुमारीयतिकुमारीयतीतिकुमारीरित्यादौस्त्रीप्रत्ययांतप्रकृतिकान्नामधातोः क्विपिप्रकृतिवदितिवचनात्कुमार्यैब्राह्मणाये
त्याद्यूह्यम् मातृशब्दस्यऋकारांतत्वेनऋणईदितीप्प्राप्ताविपिस्वस्त्रादिपाठान्नतेचस्वसातिस्रश्चतस्रश्चननांदादुहितातथायातामातेतिसप्तैतेस्वस्रादयउदाहृताइ
तिविचारविशेषश्चतत्रैववक्ष्यते ॥ ॥ इतिसारस्वतप्रसादेस्वरांताःस्त्रीलिंगाः अतोम् तपरकरणंसुखोच्चारणार्थं अकारांतस्यह्रस्वत्वेनव्यावर्त्याभावात् येनना

इतिस्त्रीलिंगाः अथस्वरांतानपुंसकलिंगाः प्रदर्श्यंते अकारांतोनपुंसकः कुलशब्दः तस्यप्रथमाद्वितीयैकवचने अतोम् अकारांतान्नपुं
सकलिंगात्परयोः स्यमोरम् भवति अधो अमोऽम्ग्रहणंलुम्व्यावृत्त्यर्थं अम्शसोरस्यकुलंइमौनपुंसकलिंगात्परऔईकारमापद्य
तेकुलेजश्शसोःशिः नपुंसकलिंगात्परयोर्जश्शसोःशिर्भवतिशकारः सर्वादेशार्थः गुरुःशिश्चसर्वस्यवक्तव्यः नुमयमः नपुंसकस्यनुमा
गमोभवतिशौपरेयमप्रत्याहारांतस्यनभवतिमिदंत्यात्स्वरात्परोवक्तव्यः नोपधायाः नांतस्योपधायादीर्घोभवतिशौपरेधिवर्जितेषुपंच
सुनामिचनच्चौतिकुलानिहेकुलहेकुलेहेकुलानिपुनरपिकुलंकुलेकुलानिशेषंदेववत् एवंमूलफलपत्रपुष्पकुटुंबादयः श्चन्यादेः
अन्यादेर्गणात्परयोः स्यमोः श्रुर्भवतिशकारःशित्कार्यार्थः उकारउच्चारणार्थः वावसाने अवसानेवर्तमानानांझसांजवाभवंतिच
पावा अन्यत् अन्यद् अन्ये अन्या निपुनरपि अन्यत् अन्यद् अन्ये अन्यानि अन्यतरत् अन्यतरद् अन्यतरे अन्यतराणि २ इतरत्
इतरद्इतरेइतराणि २ कतरत् कतरद्कतरेकतराणि २ कतमत् कतमद्कतमेकतमानि २ शेषंसर्वशब्दवत् एतेचान्यादयः इका
रांतोऽस्थिशब्दः नपुंसकात्स्यमोर्लुक् नपुंसकलिंगात्परयोःस्यमोर्लुग्भवति अस्थि ॥ ६ ॥ ७ ६ ॥ ७ ६ ७ ६ ७ ६ ७ ६ ७ ६ ॥

प्राप्तेयोविधिरारभ्यतेसतस्यबाधकइतिलुकोबाधइत्यर्थः अनेकाक्षरत्वेनगुरुत्वात्सर्वस्यैवामः स्यान्नांत्यमकारमात्रस्यनत्वत्रमएवविधीयतांसेरं
त्यस्याभावादाद्यंतन्यायेनसर्वस्यस्यात् अभोप्यंतस्यैवभविष्यतिम् विधिसामर्थ्याच्चलुगभावोपिभविष्यतीतिचेत्सत्यम् अमोमस्यमविधौकुलंयातीत्यौ

वनुस्वारो विनस्यात् मविधिसामर्थ्यात् अजरसंकुलमित्यादिप्रयोगासिद्धिप्रसंगाच्चइमो मधुनीइत्यादौ दीर्घश्रवणार्थं दीर्घविधिः जश्शसोः १ जसासाह
चर्य्यात् सानुबंधकग्रहणेन निरनुबंधकस्येति परिभाषया वा शसपि द्वितीया बहुवचनमेवेति अतः कुंडशोददातीत्यादौ शस्त्रन्ययस्य तद्धितस्य न स्यात् ज
श्शसोरिति षष्ठीनिर्द्देशादंतस्य प्राप्ताव पवाद माह गुरुरित्यादि गुरुस्त्वनेकवर्णादेशः ननु गुरुशब्दस्यानेकाक्षरादेशोपलक्षकत्वेन शेरप्यनेकाक्षरत्वादन्त्यस
र्वादेशान्त्वसिद्धौ पृथगुपादानमपार्थकमिति चेत्सत्यम् अत्वन्यादेरित्यत्र शित्करणान्नानुबंधकृतमनेकानेकाल्त्वमित्यनुबंधनिमित्तानेकवर्णत्वाभावात् नो
पधायाः नस्य नांतस्य उपधा नोपधा तस्याः नेति सांकेतिकषष्ठ्यंतं पृथगेव वा अत्र यद्यपियं चस्विति सामान्येनोक्तं तथापि वादीपोः शतुरित्यतो वानुवर्तनात् स्त्री
पुंसयोः पंचसु नपुंसके च सावितिविवेकः अधावित्यपि स्त्रीपुंसयोरेव क्लीबे प्राप्त्यभावात् अत्वन्यादेः २ अधावित्यस्यानुवृत्तेर्ड्डेरपि अमोऽपवादः समानाद्धेः
र्लोपो धातोरित्यत्र कुप्वोः कः पौवेत्यतो वानुवृत्तेर्व्यवस्थयाह अन्यदित्यत्र लोपाप्रसंगः यत्त्वन्यदित्यत्रामलुगभावाद्वात्रापि नुविधानसामर्थ्याद्वलोपाभा

प्रणां इश्च उश्च ऋश्च प्रतेषां प्रणां नपुंसके धौ वा गुणो वा न्यः हे अस्थि हे अस्थे हे अस्थिनी हे अस्थीनि उक्तं हि संबोधने तूशन
सस्त्रिरूपं सांतं तथा नांतं मथाप्यदंतं माध्यंदिनि र्वष्टि गुणं त्विगंते नपुंसके व्याघ्रपदां वरिष्ठः ॥ १ ॥ वङ्गतिनदसतयेनना प्राप्तन्यायेना

नुकोः प्राप्तयोः नुविधेस्तदपवादत्वात् विधानस्य चस्य मोरेव सार्थकत्वात् आदिशब्देन डनमां नाः पंचोपादीयंते एकतरस्य च एकाच्प्राचामिति डन 
रप्रत्यया नत्वेकतरादिस्तुतरसूत्रे प्रतिषेधान्न नपुंसके धौ वा गुण इत्यनिर्दिष्टस्थानित्वेपि गुणसंज्ञया विधीयमानन्नामिन एव स्थाने भवंतीति नियमात्र 
योनामिनः स्थानिनोऽइयाः ऋजवस्तु पित्रे ने ॥ ॥ प्रणां नपुंसके इत्यादि पठंति पूर्वाचार्यसंमतिमाह उक्तं हीति मध्यंदिनस्यापत्यं माध्यंदिनिः आचार्यः।
उशनसः उशनस शब्दस्य त्रिरूपं त्रयाणां रूपाणां समाहारस्त्रिरूपं त्रीणि रूपाणीत्यर्थः वष्टि कामयते तथा इगंते इउऋऌवर्णांते नपुंसके गुणं च वष्टि नङ्क्षौ
रथार्थे व्याघ्रपदगोत्राणां मध्ये वरिष्ठः श्रेष्ठ इत्यर्थः नामिन ३ विभक्त्यधिकाराद्विभक्तिस्वर एव न दध्यानयादौ अच्चास्थां ४ शसच्चादिर्ये षामित्यनङ्गुणसंविज्ञा
॥ न बहुव्रीह्याश्रयणात् गसं विहाय टादावित्यर्थः तदुपादानं च वसोर्व उरित्यादावनुवृत्त्यर्थं ॥

यत्नु प्रियास्थ्यः सुनः पश्येत्यादौ पुंसि शसि परे पि प्राप्त्यर्थं नदिनितद्युक्तं पाणिन्यादिविरोधात् अस्थ्नामिति बहुवचनेन अस्थिदधिसक्थ्यक्षिशब्दा गृह्यंते अत्र नदंतवि
धेरपि ष्टत्वात्प्रियदध्नाब्राह्मणेनेत्याद्यपि॥ ॥ नामिनः स्वर इति नुम् सिद्धेऽपि पुनर्नुम्विधानं टानास्त्रियामिति नाभावार्थमिति कश्चित्तदयुक्तम् विशेषत्वात्परत्वाच्चन
दभावात् नाम्यामिनुडभावार्थं नुमः परत्वादेव प्राप्तेः अत एव नुमंतस्येति पाठः वस्तुतः प्रियदध्नाब्राह्मणेनेत्यादावनपुंसकेऽपि नुम्विध्यर्थं नुम् विधेरप्यावश्यकत्वात्।
अल्लोपः योगो युक्तं येन विधिस्तदंतस्येति मकारवकारांतयुक्तसंयोगस्तस्माद् नरस्य न भवतीत्यर्थः अमानोनाः प्रतिषेध इति अकारः प्रतिषेधार्थः अत्र शसादावि

नामिनः स्वरे नाम्यंतस्य नपुंसकलिंगस्य नुमागमो भवति स्वरे परे इमौ अस्थिनी अचास्थ्नां शसादौ अस्थ्यादीनां नुमागमो भवति इकारस्य चा
कारो भवति शसादौ स्वरे परे॥ अल्लोपः स्वरेऽम्वयुक्तात् क्वसादौ नांतस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे मकारवकारांतसं
योगाद् नरस्य न भवति अस्थ्ना अस्थिभ्यां अस्थिभिः अस्थ्ने अस्थिभ्यां अस्थिभ्यः अस्थ्नः अस्थिभ्यां अस्थिभ्यः अस्थ्नः अस्थ्नोः अस्थ्नां वेङ्योः
ईङ्योः परयोर्वा अकारस्य लोपो भवति अस्थ्नि अस्थनि एवं दधिसक्थ्यक्षिशब्दाः दध्ना दधिभ्यां दधिभिः सक्थि सक्थिनी सक्थीनि र
सक्थ्ना सक्थिभ्यां सक्थिभिः अक्ष्णा अक्षिभ्यां अक्षिभिः इति पूर्ववत् प्रक्रिया नपुंसकस्य ह्रस्वः नपुंसकस्य ह्रस्वो भवति नपुंसकान्त्य
मोर्लुक् ग्रामणि नामिनः स्वरे इमौ ग्रामणिनी ग्रामणीनि नामिनः स्वरे नोपधाया इति दीर्घः॥ १॥ छ छ छ छ छ छ छ छ ॥

ति तद्गुणसंविज्ञानबहुव्रीहेराद्रादित्यादि सिद्धिः नन्वेवं कुलशब्दात् शसः सौ परे नुमि अल्लोपः स्यादिति चेत्सत्यम् पूर्वविप्रतिषेधेन नोपधाया इति दीर्घे वि
धौ सति अतो भावाल्लोपाभावाद्वेङ्योरित्यतो वानुकर्षणान्नपुंसके टादौ परेऽन्यत्र शसादाविति वाव्यवस्था वसेया नुमंतस्यामीत्यस्य वक्तव्यत्वेन प्रयोगानुसारि
त्वादस्थामिनि ज्ञापकाच्चामिविशेषत्वेन दीर्घाप्रसंगः वेङ्योर ईश्च ङिश्च ई ङी तयोः अम्वयुक्तादिति अत्राप्यनुवर्तनीयं अत एव यज्वनीत्यादावप्रसंगः नपुं
सकस्य षष्ठीनिर्दिष्टत्वाद्ध्रस्वादेशोऽन्त्यस्यैव न सुवाकुकुलमित्यादौ॥ १॥ छ १ छ छ छ छ छ छ छ छ छ छ छ छ छ छ छ ॥

टादौ ४ एकप्रवृत्तिनिमित्तत्वेनोक्तः पुमान्येन तदुक्तपुंस्कं अतोभिन्नप्रवृत्तिनिमित्तत्वेन पुमुक्तावपि पील्वादीनां न पुंवद्भावः तदुक्तम् पीलुर्वृक्षः फले पीलु
पीलुनेन तु पीलवे वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनरिति अत्र वृक्षे पीलुशब्दप्रवृत्तिनिमित्तं पीलुत्वं जातिः फले तु पीलुत्वं जात्यवच्छिन्नपी
लुजन्यत्वमिति उक्तं च एक एव हि यः शब्दस्त्रिषु लिंगेषु वर्त्तते एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते इति पुंवद्भावाभावे पूर्वविप्रतिषेधेन स्यौ वेत्यु

टादावुक्तपुंस्कं पुंवद्वा उक्तपुंस्कं नाम्यंतं नपुंसकलिंगं टादौ स्वरे पुंवद्वा भवति नामिनः स्वरे ग्रामणिना ग्रामण्या ग्रामणिभ्यां ग्रामणि
भिः ग्रामण्ये ग्रामणिने ग्रामणिभ्यां ग्रामणिभ्यः ग्रामण्यः ग्रामणिनः ग्रामणिभ्यां ग्रामणिभ्यः ग्रामण्यः ग्रामणिनः ग्रामण्योः ग्रामणि
नोः ग्रामण्यां नुमंतस्यामि दीर्घः नामिनः स्वरे ग्रामणीनां आम्ङेः ग्रामण्यां ग्रामणिनि ग्रामण्योः ग्रामणिनोः ग्रामणिषु हे ग्रामणि हे ग्रामणि
नौ हे ग्रामणीनि अतोम् सोमपं सोमपे सोमपानि २ सोमपेन सोमपाभ्यां सोमपैः सोमपाय सोमपाभ्यां सोमपेभ्यः इति पूर्ववत् उकारांतो मधुश
ब्दः नपुंसकात्स्यमोर्लुक् मधु नामिनः स्वरे इति नुमागमः मधुनी जस्शसोः शिः नोपधायाः इति दीर्घः मधूनि पुनरपि मधु मधुनी मधूनि नामिनः
स्वरे मधुना मधुभ्यां मधुभिः ऋकारांतः कर्तृशब्दः नपुंसकात्स्यमोर्लुक् कर्तृ नामिनः स्वरे ईमौ षुर्णो नोऽनं ने कर्तृणी कर्तॄणि २ ऋ रं कर्त्ता कर्तृणा क
र्तृभ्यां कर्तृभिः कर्त्रे कर्तृणे कर्तृभ्यां कर्तृभ्यः ऋतो ङ उः स च ङित् ङिति टेः कर्तुः कर्तृणः कर्तृभ्यां कर्तृभ्यः कर्तुः कर्तृणः कर्त्रोः कर्तृणोः कर्तृषु हे कर्तृः
हे कर्तृणी हे कर्तॄणि ऐकारांत अतिरै शब्दः रायमतिक्रांतमतिरि कुलं नावमतिक्रांतमतिनु जलं उकारांत उपगु शब्दः उपगता गावो यस्येति तत् 
न्यस्य बाधात्तु मेव कर्तृणा इत्यादौ च परत्वादेव ऋतो ङ उरित्यादेर्बाधः ऐकारांतादीनां सुरै प्रभृतीनां ह्रस्वा (( इ उपगु इति स्वरांता नपुंसकलिंगाः ॥ 
देशो संध्यक्षराणामिकारोकारौ वक्तव्याविति सुरि सुरिणी सुद्यु सुद्युनी सुनु सुनुनी इत्यादौ च वा पुंवत् सुरिणा सुराया सुद्युना सुद्यवा सुनुना सुनावा इत्यादयो ज्ञे
॥ याः इति सारस्वतप्रसादे स्वरांता नपुंसकलिंगाः पं चस्वनह्ह इति ॥

अनडुहश्चेतिसूत्रेणेत्यर्थः सूत्रेचदृतोत्यंचस्विन्यतः पंचसुचतुरामौशौचेत्यनंतरतः आम् शौदेतिपदान्यनुवर्त्यंअनडुहशब्दस्यामागमोभवतिपुंसिपंचसुनपुंसके
शौच चकाराच्छियांवानतश्चअनडुही अनड्वाहीतथाचअनडुहीचअनड्वांहिनन्वत्रनुमिहकारस्यरुसत्वाभावान्नश्चापदांतेरुसेइत्यस्याप्राप्तेः कथमनुस्वारइतिचेत्स
त्यंनश्चापदांतइतियोगविभागात्स्यात्सौ २ अत्रचनुमामागमोर्विरोधाभावात्समावेशः संयोगांतस्य २ रसेरसादौ विभक्ताविन्यर्थः रसेइत्यनुवृत्तिसामर्थ्यादगा
वयवस्संयोगांतत्वमाश्रयणीयं ततश्चतत्सोत्रमित्यादौसकारस्यसंयोगांतत्वाभावः पुंभ्यामित्यादौचभवति अत्रापिवानुकर्षणाल्लौकाह्वा ऊर्क् ऊर्गइत्यादौरेफान्स

अथहसांताः पुल्लिंगाः प्रदर्श्यंतेतत्रहकारांतः पुल्लिंगोअनडुहशब्दः नामसंज्ञायांस्यादयः पंचस्वनडुह आमागमोवक्तव्यः सावनडुहः
अनडुहशब्दस्यसौपरेनुमागमोभवतिसंयोगांतस्यलोपः संयोगांतस्यलोपोभवतिरसेपदांतेचरेफादुत्तरस्यसकारस्यैवलोपोनान्य
स्यहसेपस्सेर्लोपः हसांतादीवंताच्चपरस्यसेर्लोपोभवतिएवंसतिवत्वंलोपविधिसामर्थ्यान्नदत्वम् अनड्वान् अनड्वाहौअनड्वाहः अ
नड्वाहं अनड्वाहौ अनडुहः अनडुहा अनडुद्भ्यां अनडुद्भिः वसांरसोऽवसुध्वंसुत्त्रंसुअनडुहइत्येतेषांरसेपदांतेचदत्वंभवति अ
नडुहे अनडुद्भ्यां अनडुद्भ्यः अनडुहः अनडुहोः अनडुहां अनडुहां अनडुहि अनडुहोः अनडुत्सुस्वसेचपाफसानांधावम् अनडुह
शब्दस्यधौपरे आमागमोभवतिसावनडुहः एवं स्वरहीनंपरेणसंयोज्यंहे अनड्वन्हे अनड्वाहौहे अनड्वाहः इत्यादिगोदुहशब्दस्य
भेदः हादेर्घः दादेर्धातोर्हकारस्यघत्वंभवतिधातोर्भसेपरेनाम्नरसेपदांतेचगोदुघूसिइतिस्थिते ॥ २ ॥ एकारात्परस्यसंयोगान्तस्य
लोपाभावः अनड्वानित्यत्रवसांरसेइतिदत्वप्राप्तावपिनुम्विधानसामर्थ्यान्नधौ २ अत्रचतुरामौशौचेत्यतः चतुरइत्यानुवर्त्तेहैप्रियचत्वइत्यत्राप्यप्र
हेहयोः प्रगृह्यत्वात्संध्यप्रसंगः अत्रच आम् विधानसामर्थ्यादामोऽपवादः अन्यथाविशेषाभावात्तन्नुम्भवत्येव वसां २ वसामितिबहुवचनंब
हूपलक्षकमित्यभिप्रेत्याहवसुस्त्रंस्वित्यादिवसोः प्रत्ययत्वात्प्रत्ययग्रहणेननदंतस्येतिवस्वंतस्येत्यर्थः ॥ ६ ७ ६ ७ ६ ७ ६ ७ ६ ७ ६ ७ ६ ॥

सोपि सांत एवेति विद्यानित्यादौ तदभावः पूर्वेदत्वे वा संयोगांतलोपः दादेः२ दादित्वं धातुपाठोपदेशावस्थायामपेक्षितम् ततश्च अधोक् इत्यादौ अडागमे कृते सति यदाग मास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यंत इति अकारादित्वेप्युपदेशावस्थायां दादित्वाद्भवत्येव दामलिहमात्मन इच्छति दामलिह्यति दामलिह्यती तिदामलिट् इत्यादेस्त्वो मधातो ह्रादित्वेपि धातुपाठे तदभावान्न घत्वं॥ ३॥ आदिजवानां ४ अत्र वावसाने इत्यतो वानुवृत्तेर्व्यवस्थयाजं भतीति जप् इत्यादौ न यादा

आदिजवानां मभांतस्य रुभा सध्वोः धातोर्भांतस्यादौ वर्तमानानां जवानां रुभाभवंति सकारे ध्व शब्दे च परे नाम्ना स्वरसे पदांते च वावसाने अवसाने वर्तमानानां रुसानां जवा भवंति चपा वा गोधुक् गोधुग् गोदुहौ गोदुहः गोदुहं गोदुहौ गोदुहः गोदुहा भकारादौ दादेर्घ इति घत्वे आदिजवस्य दकारस्य रुभे धकारे च कृते रुभे जवाः गोधुग्भ्यां गोधुग्भिः स्से च पा रुसानां किलात् पः सः कृतस्येति षत्वं कृषसंयोगे क्षः गोधुक्षु हे गोधुक् हे गोधुग् हे गोदुहौ हे गोदुहः मधुलिह शब्दस्य विशेषः होढः धातोर्हकारस्य ढत्वं भवति धातोर्रुसे परे नाम्न स्वरे से पदांते च वावसाने मधुलिट् मधुलिड् मधुलिहौ मधुलिहः हे मधुलिट् हे मधुलिड् हे मधुलिहौ हे मधुलिहः मधुलिहं मधुलिहौ मधुलिहः मधुलिहा मधुलिड्भ्यां मधुलिड्भिः तुरासाह शब्दस्य भेदः सहेः षः साढि साढि रूपे सति सहेर्धातोस्सकारस्य षकारादेशो भवति तुराषाट् तुराषाड् इत्यादि द्रुहादीनां घत्वढत्वे वा द्रुहादीनां धातूनां घत्वढत्वे वा भवतः रुसे पदान्ते च मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड् मित्रद्रुहौ मित्रद्रुहः मित्रद्रुहं मित्रद्रुहौ मित्रद्रुहः मित्रद्रुहा झभे जवाः मित्रध्रुग्भ्यां मित्रध्रुड्भ्यां इत्यादि एवं तत्व मुहू स्नुह शब्दौ रेफांतश्चतुर्शब्दो नित्यबहुवचनांतः॥ ६ ७६॥

मलिडादौ च न गर्द्दभमात्मन इच्छति गर्द्दभीयति गर्द्दभीयतीति गर्द्धप् इत्यादौ मध्यवर्तिनोपि दकारस्य रुभत्वं नाप्यस्यापि गकारस्य वावसाने २ विरामोऽवसानमित्यवसानं प्रसिद्धमेव अत्र च रवसे च पा रुसानामित्यतः चपा इति रुभे जवा इत्यतश्च जवा इत्यनुवर्तते ततश्च वाशब्दस्य चार्थत्वादवसाने वर्तमानानां रुसानां जवाश्च पाश्च भवंतीत्यर्थः विकल्पार्थत्वे तु रुसानां चपजवौ वेत्यर्थे रूपत्रयं स्यात् होढः २ नाम्नो रसे इत्युक्तेर्ल्लीढ यति न्कुमे इत्यादौ धातोरसपरत्वेन ढत्वं द्रुहादीनामिति आदिशब्दान्मुह स्नुह स्निह्

अत्रापि चार्थो वाशब्दः अन्यथा षत्वढत्वाभावे तृतीयांतरूपं स्यात् क्वचित्तु षत्वढत्वे वेति पाठः तदा ढत्वे सति षत्वं वा भवतीत्यर्थः तन्न दुहेर्द्दीर्दित्वे प्यस्मादेव वाक्यभेदेन ढत्वं
क्वचिच्च सूत्रपाठे दादुहां वेति सूत्रं षश्च पूर्वतः तत्र च दुहादीनां षत्वं वा भवति षत्वाभावे ढत्वमिति सूत्रार्थो दर्शितः ॥ ३ ॥ चतुराम् विसर्गलोपश्छांदसः संधिः चतुर इति
सोकेतिकं षष्भंतं वा पचस्वित्यनुवृत्तिसामार्थ्यात् प्रियचत्वार इत्यादौ गौणत्वे पि रः संख्याया इत्यनेन संख्यावाचित्वे एवं गौणत्वे तु प्रियचतुरां प्राधान्ये तु परमचतुर्णां स्त्रो
विसर्ग इत्यत्र वानुकर्षणात् स्त्रोकाद्या चतुर्ष्वित्यादौ विसर्गाभावः यकृ चतुर्षि ति ज्ञापकाच्च नाम्नः ४ नाम्नो न इति सामानाधिकरण्ये षष्ठ्यो नकारांतस्य नाम्न इत्यर्थः नका

चतुराम् शौ च चतुर शब्दस्य आमागमो भवति पंचसु परेषु शौ च चत्वारः चतुरः चतुर्भिः चतुर्भ्यः २ रः संख्यायाः रेफांतसंख्यायाः परस्यामो नु
डागमो भवति णत्वं द्वित्वं चतुर्णां चतुर्षु नकारांतो राजन् शब्दः नोपधाया इति पंचसु दीर्घः नाम्नो नो लोपशधौ नाम्नो नकारस्यानागमजस्य लो
पश्च भवति रसे पदांते चाधौ राजा राजानौ राजानः राजानं राजानौ अल्लोपः स्वरे ऽम्वयुक्तात् असादौ स्तोश्चुभिश्चुरिति चुत्वेन ञकारः जञोर्ज्ञः जकार
ञकारयोर्योगे ज्ञो भवति राज्ञः राज्ञा राजभ्यां राजभ्यः २ वेड्ड्यो राज्ञि राजनि राज्ञोः राजसु इत्यादि एवं यज्वन् आत्मन् स्वधर्म्मन् प्रभृतयः अ
म्वयुक्तादिति विशेषणाद् अल्लोपो नास्ति यज्वनः यज्वना इत्यादि श्वन् युवन् मघवन् शब्दानां पंचसु राजन् शब्दवत् प्रक्रिया शसादौ तु वि
शेषः श्वादेर्वउः श्वादेर्वकारस्य उत्वं भवति शसादौ स्वरे परे ऽतद्धिते ईपि इकारे च शुनः शुना श्वभ्यां श्वभिरित्यादि युवन् शब्दस्य वकारस्योत्वे
कृते सवर्णो दीर्घः सह यूनः यूना युवभ्यां युवभिरित्यादि पथिन् शब्दस्य भेदः ॥ ९ रांतत्वं चोपदेशावस्थायामेव लोपस्यादेशविशेषत्वान्न षष्ठीनिर्द्दिष्टस्ये

त्वं तस्य अन्यथा नर नारायणादि ष्वादिभूतस्यापि नस्य लोपप्रसंगः तथा सुहिन् मशान् इत्यादावुपदेशकाले नांतत्वाभावान्न लोपाप्रसंगः मो नो धातोरित्यादि
नामस्य नकारादेशात् अधावित्यस्य डेः रष्युपलक्षणाद्दैदिकत्वाद्वा परमेव्यो मन् इत्यादौ ऽडवपि न लोपाभावः जञोर्ज्ञ इत्यत्र जकारात्परे णञकारेण योगे
ज्ञ इत्यर्थो ऽड्ग्रा ज्ञानातीत्यादौ न वक्तव्यत्वाद्वा श्वादेः वसोर्वउमित्यतो वउमित्यनुवर्ततेत तत्र च वकारेण युक्तः अः व इत्यर्थः ॥ ६ ७ ६ ७ ६ ॥

वधारणात्सस्वरस्योत्वंवकारमात्रोत्वेतुअकारश्रवणंस्यात्नचाकारस्याल्लोपःस्वरेइतिलोपःस्यादितिवाच्यंसन्नम्येकवचेनेऽल्लोपविकल्पात्पक्षेश्रवणप्रसंगा
त्शसादाविन्यादिशब्दादीपिकारेचेत्युक्तमक्वचिदीपिइतिसूत्रमत्रचईश्चईच्चतयोःसमाहारेईपूतस्मिन्नित्यधिकारःशुनीमघोनीयुवतीत्यादौनिपातनान्नई
कारेचशोभनायुवानोययोःकुलयोस्तेसुयूनीइत्यादिमघकौटिल्येमघनंमघःमघोस्यास्तीतिमघवान्मघवंतौइत्यादिवन्प्रत्ययांतोमघवच्छब्दोऽन्यएवा॥इतोत

इतोत्यंचसुपथ्यादीनामिकारस्याकारादेशोभवतिपंचसुपरेषुथोनुट्पथ्यादीनांथकारस्यनुडागमोभवतिपंचसुस्यादिषुपरेषुपंथन्
सिइतिस्थितेआसौपथ्यादीनांटेरात्त्वंभवतिसौपरेपंथाःपंथानौपंथानःआत्वविधानान्नसेर्लोपःहेपंथाःपंथानंपंथानौपथःटेःपथ्यादीनां
टेर्लोपोभवतिशसादौस्वरेपरेपथःपथापथिभ्यांपथिभिरित्यादिएवंमथिन्ऋभुक्षिन्शब्दौदंडिन्शब्दस्यभेदःइनांशौसौइन्हन्पूषन्
अर्यमन्इत्येतेषांशौसौचाधौपरेउपधायादीर्घोभवतिदंडीदंडिनौदंडिनःहेदंडिन्दंडिनंदंडिनौदंडिनःदंडिनादंडिभ्यांदंडिभिःइत्या
दिब्रह्महाब्रह्महणौब्रह्महणःहेब्रह्महन्हेब्रह्महणौहेब्रह्महणःब्रह्महणंब्रह्महणौशसादौअकारलोपःहनोघ्नेहंतेर्घोनोर्हकारस्यघ
कारोभवतिनकारेञ्णितिचपरेघसंयोगेणत्वनिषेधार्थःब्रह्मघ्नःब्रह्मघ्नाब्रह्महभ्यांब्रह्महभिःइत्यादिपूषापूषणौपूषणःहेपूषन्हे
पूषणौहेपूषणःपूषणंपूषणौ२षणोष्णःषकारसंयोगेष्णोभवतिशसादौस्वरेपरेपूषन्शब्दस्यशसादौस्वरेपरेवाटेर्लोपःपूष्णःपूष्णा
पूषभ्यांपूषभिःपूष्णेडौटिलोपोवेतिकेचित्पूष्णिपूषणिपूष्णोःपूषसुअर्यमाणःअर्यमणाअर्यमभ्यांइत्यादिसंख्याशब्दाःपंचन्प्रभृ राम
तयोबहुवचनांतास्त्रिषुसरूपाःपंचन्जसइतिस्थिते॰॥९॥३॥पंथ्यांटेरित्यतःपथामित्यनुवर्तनेनतत्रयथामितिबहुवचनेमथिनऋभुक्षि २३
न्शब्दावप्युपादीयेतेइनांअत्रापिबहुवचनस्यबहुपस्यापकतामभिप्रेत्याहइनहन्नित्यादिइनःप्रत्ययत्वादिन्नंतस्यनोपधायाइत्यनेनसिद्धेऽपिनियमार्थः।
सिद्धेसत्यारंभोनियमायेतिन्यायात्हनः४हनःघ्नेइतिच्छेदःहनोघत्इत्यतो॥९॥७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७॥

हनइत्यनुवर्त्तनीयं ननश्चहंतेर्नकारेपरेहंतेर्हस्यघत्वंभवतीत्यर्थः अन्यथावृत्रहन्नमस्तेजुहावेत्यत्रापिप्रसंगात् तत्रहकाराव्यवहितपरत्वसंभवान्नस्यहाव्यवधा
नपरत्वंञ्णात्परत्वंतुधातोरितिविवेकः एवंवृत्रहणाविन्यादावप्रसंगः घसंयोगइतिक्वचिदेकपद्येणत्वहेतुरितिक्वचिच्छब्दाद्धंतेरकारपूर्वस्यैवेत्यर्थाद्घसंयोगेचेने
हभावाणत्वंनेत्यर्थः ॥ ॥ जश्शसोः ९ षाद्इत्यनुवर्त्तने तत्रचउपदेशकालएवष्णांतत्वविवक्षणाच्छुनानीत्यादौलोपाप्रसंगः प्रत्ययलोपेप्रत्ययलक्षणमितिजश्शा
सोर्लोपेपिनन्निमित्तो पधादीर्घाकारलोपादिप्राप्ताववाहलुकीतिलुक्शब्देनवर्णादर्शनेसतितन्निमित्तमंगकार्य्यंनभवतीत्यर्थः ष्णःषट्चनचष्ण्तस्मात् अत्रा

जश्शसोर्लुक् षकारनकारांतसंख्यायाः परयोर्जश्शसोर्लुक्भवति प्रत्ययलोपेप्रत्ययलक्षणंलुकिनतन्निमित्तंपंचपंचभिः पं
चभ्यः२ ष्णः षकारनकारांतसंख्यायाः परस्यामोनुडागमो भवति नोपधायाइतिदीर्घः नाम्नोनोलोपशधौ पंचानां पंचसु एवंसप्तन्न
वन्दशन्प्रभृतयः अष्टनोवाडौ अष्टन्शब्दात्परयोर्जश्शसोर्वाडौभवति डित्वाट्टिलोपः अष्टौ अष्ट अष्टौ अष्टवासुवात्मा आसु अष्टन
आसुपरासुविभक्तिषुवा आत्वंभवति अष्टभिः अष्टाभिः अष्टभ्यः अष्टाभ्यः२ अष्टानां अष्टसु अष्टासु मकारांतइदम् शब्दः इदमोयंपुंसि इदम्
शब्दस्यपुंसिविषये अयमादेशोभवति सिसहितस्य अयं द्विवचनादौत्यदादेरस्यादावित्यकारः इद अ इति स्थिते दस्यमः त्यदादीनांद
कारस्यमत्वंभवति स्यादौपरे इमौ इमे सर्वादित्वाज्जसीत्यदादीनांघेरभावः इमं इमौ इमान् अनटौसोः इदमोऽनादेशोभवतिटौसोःपर
योः अनेननस्यः इदमः सकारेभकारेचपरे अकारोभवतिहल्त्वस्य अङ्गीन्यात्वं आभ्यां ॥ ९ पिसंख्यायाःप्राधान्येपरमपंचानामित्यादौभवत्ये
वगौणत्वेतुप्रियपंचानामित्यादौन अष्टनइवइत्यत्र आकारप्रश्लेषात्·वासुइत्यनेन आत्वपक्षेएवडौविधिः अत्रापिसंख्यायाइत्यनुवृत्तेर्गौणत्वेनात्वंनवाडौवस्तु
तोवासुइत्यत्र आइतितृतीयैकवचनंनसुइतिसप्तमीबहुवचनेनचप्रत्याहारग्रहणादत्रात्वाभावएवयद्यत्रात्वंस्याड्डावितिडित्करणंव्यर्थंस्यात् गौणात्वेप्यात्वं
जश्शसोरौत्वंवेत्येकेइत्यस्य चानादरएव अष्टानामित्यत्रनुटिसत्यात्वं आत्वेवाउपदेशकालेनकारांतत्वान्नुट् आत्वाभावेपिनुटिउपधादीर्घेचरसौ ॥ ६७ ७ ॥

हिपरत्वेननलोपइतिसमानरूपत्वादेकमेवरूपमइदमः ३ अनेकवर्णत्वात्सर्वस्यमकारांतत्वाद्सेपः सेर्लोपः हेअसकौब्राह्मणीत्यादौसंबोधनसंभवेपिप्रचुरप्र-
योगाभावोक्तिः स्यः स्मिन्अः त्यदादेष्टेरः स्यादावित्यकारेसिद्धेऽपिपुनर्विधानसामर्थ्यात्सर्वस्येत्येकेतदसत् त्यदादेष्टेरितिटेरकारविधानात् अनेनचेदमःषष्ठीनिर्दि-
ष्टत्वेनांत्यस्येतिनिर्वैयर्थ्याभावत् अन्येतुअः इत्यस्यविसर्गपरत्वेनगुरुत्वात्सर्वस्येत्याहुः तदपिमंदंगुरुशब्दस्यानेकाक्षरपरत्वप्रतिपादनात् क्ष्शषराजादेःषइत्या
दौषइत्यस्यापिविसर्गपरत्वेनगुरुत्वापत्त्यासर्वादेशप्रसंगात् प्रयोगेविसर्गश्रवणाच्चवस्तुतस्तुइदमोपंपुंसोन्यतइदमइतिविभक्तिविपरिणामेनप्रथमांतमनु

भिसभिस इदमदसोर्भिसभिसेवभवतिनभकारस्याकारः एभिवहुत्वेएभिः अस्मै आभ्यां एभ्यः अस्मात् आभ्यां एभ्यः अस्य अनयोः
एषां अस्मिन् अनयोः एषुकिम् शब्दस्यत्यदादेष्टेरः स्यादावितिसर्वत्राकारेकृतेसर्वशब्दवद्रूपम् कः कौकेकंकौकान् इत्यादिधकारांतः
तत्वबुध शब्दः तस्यस्सेपदांतेचादिजवानामितिभकारः वावसाने तत्वभुत् तत्वभुद् तत्वबुधौतत्वबुधः हेतत्वभुत् हेतत्वभुद् तत्वबुधं
तत्वबुधौतत्वबुधः तत्वबुधातत्वभुद्भ्यांतत्वभुद्भिः इत्यादिजकारांतः सम्राज् शब्दः क्ष्शषराजादेःषः छकारांतस्यशकारांतस्यषकारांतस्य
चराज् यज् सृज् मृज् भ्राजादेश्चषकाराभवतिधातोर्झसेपरेनाम्नश्चरसेपदांतेचषोडः षकारस्यडत्वंभवतिधातोर्झसेपरेनाम्नश्चरसेपदांतेच
वावस्यनेटकारडकारश्चसम्राट्सम्राड्सम्राजौ सम्राजः संम्राजं सम्राजौ संम्राजः सम्राजा सम्राड्भ्यांसम्राड्भिः इतिदि एवंविराजादयः द
कारांताः त्यद् तद् यद् एतद् शब्दास्तेषांत्यदादेष्टेरः स्यादावितिसर्वत्राकारेकृतेसर्वशब्दवद्रूपंज्ञेयं॥ १ वर्तनीयंततश्चनिर्दिश्यमानस्यादेशाभवंती

तिसर्वस्यैवस्यात् षष्ठीनिर्दिष्टस्येत्यस्यवक्तव्यत्वेनप्रयोगानुसारित्वादत्राप्रवृत्तिर्वा॥ः॥भिस २ भिसोभिस्विधानंकार्यांतरव्यावृत्त्यर्थमित्यभिप्रेत्योक्तंनमकारस्याकार
इतिइदमदसोरककारयोरेवअकचितुइमकैः अमुकैरित्यादिक्ष्शष २ आदिशब्दात्व्रश्चभ्रस्जसृजमृजयजभ्राजादीनांग्रहणम् अत्रकेचित्क्ष्शषराजादेरित्यत्र
षग्रहणाव्यर्थं आख्यातादौडत्वनिषेधार्थमित्यप्युक्तं अद्देट् इत्यादौडत्वदर्शनात् नचद्वेष्टीत्यादौडत्वाभावार्थमडत्वविधायकस्यषोडइत्यस्यापिवैयर्थ्यात्॥ २॥

षट्‌ षड्भ्यः षड्भ्य इत्यादौ वावसाने रुभे जवाः खसे चपा रुसानामित्यादिभिः सिद्धेः यद्यपि यथासंख्यत्वं नास्ति तथापि ऋटुरषाणां मूर्द्धेत्यादिस्थानादिसाम्यात्स्थानेऽन्तर
तम इति न्यायेन षस्थाने डविधेः न च षण्णामित्यत्र षकारस्य डविध्यसंभवात् ङ्णः इत्यस्य निर्विषयत्वप्रसंगात्षोड इत्यस्य सार्थकत्वमिति वाच्यं ङ्णः इत्यत्र षकारस्यै
ववावसान इति हृत उकारस्य निर्देशात् संख्यासंबंधिनः षकारस्यैव णत्वविधानात् धातोर्नसे इति वाऽत्यंतमसंगतमेव द्वेष्टेर्द्वेष्टी त्यादौ रुसे परेऽदर्शनात् अ
त एव पाणिनिनापि द्वशांषड् इत्येवोक्तमित्याहुः तदसत् सवर्णत्वयथासंख्यत्वाभ्यां मात्रादेशविधानात् तत्र रुसानामादेशिनां बहुत्वेन जवादीनामादेशानां
चपंचत्वान्यं चकं पंचकापेक्षया यथासंख्यत्वम् न तत्र च शषसानां त्रिकत्वेन यथासंख्यत्वाभावः वर्ग्यो वर्ग्येण सवर्ण इति सवर्णत्वविधानादेषां सवर्णत्वाभावः

स्तः त्यदादेस्तकारस्य सौ परे सत्वं भवति स्यः त्यौ त्ये त्यं त्यौ त्यान् सः तौ ते तं तौ तान् यः यौ ये यं यौ यान् एषः एतौ एते एतदोऽन्वादेशे द्वितीया
टौस्स्वेनो वा वक्तव्यः उक्तस्य पुनरुक्तमन्वादेशः यथानेन बालेन व्याकरणमधीतं एनं छंदोध्यापय एतं एनं एतौ एनौ एतान् एनान् एतेन ए
नेन एताभ्यां एतैः एतयोः एनयोः एतेषां एतस्मिन् एतयोः एनयोः एतेषु छकारान्तस्तत्वप्राच्छ् शब्दः तत्वप्राट् तत्वप्राड् तत्वप्राच्छौ तत्वप्राच्छः
इत्यादि थकारान्तोऽग्निमथ् शब्दः तस्य वावसाने चपा जवाश्च अग्निमत् अग्निमद् अग्निमथौ अग्निमथः इत्यादि चकारान्तः प्रत्यंच् शब्दः
प्रस्तुते रेफोष्मणां न सवर्णा इति शषसहानामूष्मत्वात्सवर्णत्वप्रतिषेधः स्यानेन्तरतम इत्यात्र यणो वर्ग्यो वर्ग्येणेति सवर्णत्वादकारस्थाने दकार इत्यादि वैयर्थ्यप्र
संगः द्वेष्टीत्यादौ खसे चपा रुसानामिति च प्रसंगाच्च ङ्णः इत्यत्र च षकारस्य णत्वे ष्टुविधानप्रसंगात् अवसाननिमित्ताभावेन नैमित्तिकस्य जवस्य निवृत्तत्वान्न त
ढौ इत्यादिसिद्ध्यर्थं चावश्यं धातोर्नसे इति वक्तव्यं डत्वनिषेधार्थमिति तु कश्चिदेवेति दिक् आख्यातादावित्यादिशब्दात् शुष्क इत्यादावपि न सत्वा ड्विरित्यत्र क
चिदपदान्तताश्रयणीयेति दोरं त्यादिति षत्वनिषेधः॥१॥ स्तः २ सोऽस इत्यतः ए इत्यनुवर्तमानेपि पुनः सग्रहणसामर्थ्यात् आपि परेपि सादित्यत्र सत्वमकचित्
इत्येव साइत्यत्र सत्वं च येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादिति न्यायात् सादेः सानन्तरं चापूविधिः एतद इति॥ ६ ७ ६ ७ ६ ७ ६॥

टी॰ प्र॰ १

सम्मनंतरस्येदमोप्युपलक्षणं तस्यापि किं विक्रियाविशिष्टत्वेनोक्तस्य पुनस्तेनान्येन वा क्रियांतरविशिष्टत्वेनोक्तिरन्वादेश इत्यर्थः अत एवैषदर्थे क्रि
यायोगे मर्य्यादाभिविधौ च यः एतमातं ङितं विद्यादित्यादौ स्वरूपेणानिर्दिष्टस्याप्यात्तः क्रियाविशिष्टत्वेनोक्त्यभावादन्वादेशत्वाभावः नपुंसके द्वितीयैकवचने श्लं
त्यादेरित्यत्र श्लु इति योगविभागादमः श्लु आदेशे एनदित्यादिसिद्धिः इमं छात्रं छंदोध्यापय अथो एनं व्याकरणमध्यापय अनेन रात्रिरधीता अथो एनेनाहरप्यधी
तं अनयोः शोभनं कुलमथो एनयोः प्रभूतं स्वमित्याद्यूह्यम् एवमेतदोपि वा वसानइति नकारदकाराविति सवर्णत्वादित्यर्थः यथासंख्ये नत्रु यकारः प्राप्नुयात् अंचे
नोल्लोपः धातोर्हसांतस्योपधाभूतस्य नकारस्य लोपो भवति अंचेः पंचसु नुम् वक्तव्यः प्रत्यन् च इति स्थिते स्लोश्चुभिश्चुरिति चुत्वेन ञ
कारः संयोगांतस्य लोपः चोः कुः चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्न स्वरसे पदांते यथासंख्येन प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः प्रत्यञ्चं
प्रत्यञ्चौ अंचेरल्लोपो दीर्घश्च अंचेर्धातोरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे नद्धिते ईयीकारे च निमित्ताभावे नैमित्तिकस्याप्य
भावः प्रतीचः प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिः प्रत्यक्षु एवं तिर्यच् प्रभृतयः तिर्यङ् तिर्यञ्चौ तिर्य्यञ्चः तिर्यञ्चं तिर्यञ्चौ तिरश्चादयः तिरश्चादयो
निपात्यंते शसादौ स्वरे परे नद्धिते ईपि ईकारे च तिरश्चः तिरश्चा तिर्यग्भ्यां तिर्य्यग्भिः तिर्य्यक्षु उदच् शब्दस्य उदीच इति निपात्यते शसादौ
स्वरे परे उदीचः उदीचा इत्यादि एवमग्निचित् नकारांत उकारानुबंधो महत्शब्दः॥ १ विति अंचु गतिपूजनयोरेतस्य॥ ःः॥ नोल्लोप इत्यनेन मत्य
र्थतायामेव नलोपे पंचसु नुम्विधीयते यद्यपि रत्वान्नश्चापदांत इत्यनुस्वारः प्राप्नोति तथापि परस्य ष्टुत्वाचित्वात्पूर्वविप्रतिषेधेन अनुस्वारे वा परसवर्णत्वे विशे
षाभावाच्च स्लोश्चुभिश्चुरित्याद्युक्तिः य तु कृताकृतप्रसंगित्वेन नित्यत्वात्संयोगांतलोपे श्चुत्वाभावात् कुत्वाप्रसंगः कृते वा श्चुत्वे संयोगांतलोपे निमित्ताभावन्याये
न तदभावात्कुत्वमसंगतमेव तस्माद्दिशामिति बहुवचनेन बहूनामुपादानादस्यापि तेनैव कुत्वमिति तदसत् सख्याविन्यादौ निमित्ताभावन्यायस्यानित्यत्वप्रति
पादनात् वागित्यादावपि दिशामित्यनेनैव कुत्वसंभवे चोः कुरित्यस्यानर्थक्यपाताच्च असिद्धं बहिरंगमंतरंग इति बहिरंगसंयोगांतलोपस्यांतरंगे श्चुत्वे सिद्धत्वाच्च॥

राम
२५

अंचेः २ ईपीति सूत्रानुवृत्तेरीपिईकारे चेत्युक्तमत्र चकाराच्चानुक्तसमुच्चयार्थो नहि नेइति वेङ्गोरित्यतो वानुवृत्तेस्तस्य च व्यवस्थया पूजार्थस्याचतेर्नं अंचेरितिलुप्त
नकारनिर्द्देशेतु पूजार्थस्य नलोपाभावादेव न अकारस्य लुप्तत्वाच्चकारस्य चाचश्चेति नियमाद्दीर्घासंभवाद्विधानसामर्थ्यात्पूर्वस्येति स चाव्यवहित एव ग्राह्यः तत
श्च प्रतीचइत्यत्र प्रइत्यस्याकारस्याप्रसंगः न हि ते प्रतीचीनः प्रतीच्यः ईपि प्रतीचीदिक् ईकारे प्रतीचीकुलेपंचस्वितिनिर्द्देशेन यत्कार्यं तत्स्त्रीपुंसयोरेवेति नपुंसकेनु
मभावः पूजार्थस्य तु पंचस्वविशेषः शसादौ प्रत्यंचः प्रत्यंचाभ्यामिसंयोगांतलोपेकुत्वे च प्रत्यङ्भ्यामित्यादि सुपि क्लोः कुक्टुगिति कुकि षत्वे सादेशे च प्रत्यङ्क्षु तिरश्चा

वृतोनुम् उकारानुबंधस्य ऋकारानुबंधस्य च नुमागमो भवति पुंसि पंचसु परेषु नसंमहतो धोर्दीर्घः शौ च नसंतस्याप्शब्दस्य महच्छब्दस्य च उ
पधाया दीर्घो भवति पंचसु धीवर्ज्जितेषु शौ च परे महान् महांतौ महांतः महांतं महांतौ महतः महता महद्भ्यां महद्भिः इत्यादि हे महन् उका
रानुबंधो भवत् शब्दः अत्वसोः सौ अत्वंतस्यासंतस्य च दीर्घो भवति धिवर्ज्जितेषु शौ च परे भवान् भवंतौ भवंतः इत्यादि ऋकारानुबन्धस्य
भवच्छब्दस्य नुमागम एव न दीर्घः भवन् भवंतौ भवंतः इत्यादि पठन् पठंतौ पठंतः पठंतं पठंतौ पचन् पचंतौ पचंतः इत्यादि शकारांतो विशश
ब्दः छशाषराजादिना षत्वं षोडः षकारस्य डत्वं च वावसाने च पा जवाश्च विट् विड् विशौ विशः इत्यादि षकारांतः षष्शब्दो नित्यं बहुबच
नांतस्त्रिषु सरूपः जश्शसोर्ल्लुक् षोडः षट् षड् षड्भिः षड्भ्यः २ ह्रस्वइति नुडागमः षड्नाम् इति स्थिते ह्लः संख्यासंबंधिनो डकारस्य णत्वं भ
वति नामि परे षट्सु भिषुः षण्णां षट्सु क्वचिदपदांतेपदांततानाश्रयणीया ॥ ९ त्यदः आदिशब्दात् असुं अंचतीति विग्रहे ङचतौ परे ऽद्रसष्टेरद्र्यादेशेऽदद्र्य
अदद्र्यचौ अदद्र्यंचः अदमुईचः अमुमुईचः अदद्रीचः इत्यादयः प्रयोगानुसारतो ज्ञेयाः ॥ ० ॥ त्रितः २ उश्च ऋश्च लृश्च उऋऌ इत् यस्य स त्रित् तस्येत्यभिप्रेत्याह उकारा
नुबंधस्येत्यादि नन्वंचत्तेरप्युकारानुबंधित्वादनेनैव नुम् सिद्धो वक्तव्यं न च वक्तव्यमिति चेत् सत्यं सिद्धे सत्यारंभो नियमायेति धातुषूकारानुबंधेचं च तेरेवेति अ
तउखा स्रत्पर्णध्वंत इत्यादौ नुमभावः नुनपमइत्यत्र नुमितियोगविभागादंचेरित्यस्य युजेरुपलक्षणत्वाद्वा युजेरसमासे नुम् युङ् युंजौ ॥ ९ ७ ९ ॥

इत्यादिसमासेनु अप्सुजाविन्यादिपंचस्विन्यस्यनपुंसकव्यतिरिक्तविषयत्वेपिस्त्रियांवृत्तिरविधेःपुंसीत्युक्तंपुंसोसुङित्यतोविभक्तिविपरिणामेनपुंसीत्यनुवृत्ति
तितन्नकिंयत्किंयतीइत्यादौननुम्नसम्महतः ५ सुचअपूचमहतूचतेषांसमाहारःनसम्महत् तस्यअत्रवादीयोःशतुरित्यतोवानुवृत्तेःमहच्छब्दसाहचर्याच्चअंस
विभाजनेइत्यस्यक्विपिअन्अंसावित्यादौन्संतत्वेपिनअन्वसोः २ अनुस्वनअसूचअन्वसौनयोःअत्रापिवानुवृत्तेःसुष्ठुवस्तेसुवःपिंडग्रइत्यादौननुमागमएवेत्ये
कारेणअन्त्वंननत्वाभावाद्वदीर्घइत्यर्थः ननुषड्ढित्यादौष्टुत्वंकुतोनेत्यतआहकश्चित्पदांततेतिअपदांतेपिपदांताश्रयणान्तदोरित्यादितिष्टुत्वनिषेधान्नभवतीति

दोषांरः दोषसजुष आशिषद्दविषप्रभृतीनांषकारस्यरेफोभवतिरसेपदांतेचदोःदोषौदोषःदोषंदोषौदोषूशब्दस्यशसादौस्वरे
परेनातनावावक्तव्यादोषःदोष्णःदोषादोसादोर्भ्यांइत्यादिसजूःसजुषौसजुषःसजुषाशिषोरसेपदान्तेचदीर्घोवक्तव्यःसजूर्भ्यां
मित्यादिपुंसोऽसुङ्पुंसशब्दस्यपंचसुपरेषु असुङादेशोभवतिङकारोऽन्त्यादेशार्थःस्वरेमःअनुस्वारस्यमकारोभवतिपुम् असू
इतिस्थितेवृत्तौनुम्नसम्महतोऽधौदीर्घःशौचसंयोगांतस्यलोपःपुमान् पुमांसौपुमांसःपुमांसंपुमांसौपुंसःपुंसापुंभ्यांपुंभिःहेपुमन्
असंभवेपुंसःककुसौवेदानेकवैरस्यात्मनोबहुत्वासंभवेऽर्थेवाच्येसतिपुंसशब्दस्यसुपिपरेकगागमोभवतिस्कोरादोश्चसंयोगाद्योः
सकारककारयोर्लोपोभवतिधातोर्रुःसेपरेनाश्वरसेपदांतेचपुंक्षुएवंविद्वस्शब्दःविद्वान् विद्वांसौ विद्वांसःहेविद्वन् विद्वांसं विद्वांसौ राम २६

भावः॥ ॥ दोषांअन्होरोरात्रिष्विन्यानोरइत्यनुवर्ततेवहुवचनंबहूनांग्राहकमित्यभिप्रेत्याहदोषूसजुषित्यादियद्यपिदाम्यतीतिदमेर्डोसिदोरितितनअपर
त्यान्त्योर्विसर्गेइत्यनेनैवसिद्धिस्तथापिजुषीप्रीतोजोषणंजुइतेनसहवर्ततइतिसजूर्मित्रमितिषप्रकृतिकस्यविसर्गोप्राप्नेस्तदर्थंक्रियमाणमेषामप्युपकारकंत्र
च्युत्यत्रपक्षाश्रयेणावानचाशीष्यतिरित्यादौरेफप्रकृतिकस्यस्वयेवेत्यनेनपक्षेरेफादेशप्रसंगःस्यादितिवाच्यंवक्तव्यत्वाद्द्वाशब्दव्यवस्थयावातदभावान् शसादा
वनंतनावावक्तव्येत्यत्रअकारोपादानंभ्यामाद्धौडौचपक्षेश्रवणार्थम् सजुषाशिषोरितिविर्विहसइतिसूत्रेणेत्यर्थः आङ्पूर्वस्यशासेः॥

क्विपि उपधायाइकारे धातुसंबंधित्वादिवर्णोवर्णयोः अथवा वक्तव्यारंभसामर्थ्यात् य्वोर्विहसइतिदीर्घविधेस्सार्वत्रिकत्वद्योतनात्कुर्व्वइत्यादौदीर्घाभावः अव्यु
त्पन्नपक्षाश्रयेपिदीर्घविध्यर्थैवासप्तमीबहुवचनेधातोरपिरेफस्यविसर्गः धातोर्नेतिनियमात् ततश्चवाशरीतिविसर्जनीयसकारौ असंभवइतिवेदानेकवेद्य
स्यात्मन एकमेवाद्वितीयंनेहनानास्तिकिंचनेत्यादिभिरेकत्वेनप्रतिपादितस्यपुंसः बहुषुबहुवचनमितिवद्ध्यर्थवाचित्वविहितबहुवचनासंभवइत्यर्थः अथवा
संयोगांतलोपेनपुंस्वितिसर्वत्रसंभवेएवमुक्तिः पुंक्षुबहुष्वपीत्यादिप्रयोगस्यासंभवउद्भावितेतत्कविधानेनसंभवतीत्यर्थः तत्रसंयोगांतलोपएकदेशविकृतस्या
नन्यत्वेन कगागमेषत्वेक्षादेशेमस्यानुस्वारःयत्तुमध्यवर्तिनोपिसकारस्यादित्वविवक्षायांस्कोरादेश्चेतिसलोपइतितदसत् एवंविधादित्वविवक्षायामत्र

वसोर्वेउः वसोः संबंधिनोवकारस्यउत्वंप्राप्नोतिशसादौस्वरेपरेतद्धितेईपिईकारेचविदुषः विदुषावसांरसेविद्वद्भ्यांविद्वद्भिःविद्वत्सु
इत्यादिसुवचसशब्दस्यअत्वसोःसौइतिदीर्घःसुवचाः सुवचसौसुवचसः हेसुवचः सुवचसंसुवचसःसुवचसासुवचोभ्यांसुवचो
भिः उशनसशब्दस्यभेदः उशनसां उशनस् पुरुदंशस् अनेहस् इत्येतेषांसेरधेर्डाभवतिडकारष्टिलोपार्थः उशनाः।उशन
सौधौसांततानांततां अदंततावावक्तव्याहे उशनः हेउशनन् हेउशन अदस् शब्दस्यविशेषःत्यदादेष्टेरितिसर्वत्राकारः अदसिइ
तिस्थितेसौसः अदसोदकारस्यसौपरेसत्वंभवतिसेरौ अदसः सेरौभवति असौद्विवचने अद औइतिस्थितेदस्यमः॥ १ ॥

गाद्धौणिकत्वात् उक्तयुक्त्यैवसंभवेकुसृष्टिकरणेप्रमाणाभावात् अतिप्रसंगाच्च॥ ॥ वसोः उ अत्रापिपूर्ववद्वकारसहिताकारस्य उत्वम वसोरेकानुबंधकस्यग्र
नित्यत्वस्यापिकसोरप्युपलक्षणत्वात्तस्थिवान् तस्थुषः वस्योत्वेनिमित्ताभावन्यायेनेणिवृत्ताचातो नपीत्यालोपः तथाजगन्वान् जगमुषइत्यत्रापिमोनोधातोरित्यस्या
वा आर्द्रतिताभावात्तद्धितेवैदुष्यं विदुष्मान् ईपिविदुषीईकारेविदुषीकुले उशनसौधावितिसकारांतस्योशनस्शब्दस्यसकारस्यानेनकारेणानांततासकारलोपे
त्त्वेवेत्यर्थः नांतादंतयोर्विकल्पेपक्षेसांतप्रकृतिरपित्रिरूपत्वंचोक्तमेवसौ अत्रत्यदादेरित्यनुवृत्तावपीदमोदस्यसावसंभवाददसइत्युक्तं॥ १ ॥

त्यादिसमासेनेविगृह्य व्याचष्टेउअ ऊअ इति आदेशयोरेकमात्रद्विमात्रत्वान्मांत्य एवादेशिनावपिएकमात्रद्विमात्रौग्राह्यौनतथ्वांनरतमत्वादेकमात्रस्यैकमात्रउः द्वि
तितस्यविचद्विमात्रइत्यर्थः एरी ३ अत्रापिमादित्यनुवर्तनेरमुकेइत्यत्रनमत्वेउत्वेचकृतेनइतिवक्तव्यमेतत् अन्यथाएवंनियामकाभावात् सामान्येइति सामान्येविशेषा
नविभाशनेथैअदसशब्दात्कप्रत्ययोभवतिसचस्यादिवत्सेसिप्रत्ययस्यादिः प्रकृतिः अदसशब्दः नहुतनत्सहितसाप्यदसोऽदसकार्यंभवतीत्यपितंत्रेणार्थःअथ
कारेणाद् उअ ऊअ ऊः अदसोमकारात्परस्य ह्रस्वस्यह्रस्व उकारोभवतिदीर्घस्यचदीर्घऊकारोभवति ५ अमूबहुवचनेसर्वादित्वाज्जसी
देअइए अमेइतिस्थिते एरीबहुत्वेबहुत्वेसत्यदसएकारस्यईकारोभवति अमी अमुं अमू अमून् मत्वेउत्वेचकृतेटानास्त्रियां अमुना
द्विवचने अङ्गीत्यात्वंप आदुकारः अमूभ्यांभिसभिस् इदमदसोभिस् भिसेवभवतिनभकारस्याकारः अमीभिः अमुष्मै अमूभ्यां अ
मीभ्यः अमुष्मात् अमूभ्यां अमीभ्यः अमुष्य ओसिएत्वे अयादेशेचकृतेप आदुकारः अमुयोः अमीषां अमुष्मिन् अमुयोः अमीषु
सामान्ये अदसःकःस्यादिवच्च अमुकः अमुकौ अमुका इतिहसांताः पुल्लिंगाः अथहसांताःस्त्रीलिंगाः तत्रहकारांतउपानह् शब्दः नहो
धः नहोहकारस्यधकारादेशो भवतिरसेपदांतेचवावसानेधस्यदत्वंतत्वं उपानत् उपानद् उपानहौ उपानहः हेउपानत् उपानहं उ
पानहौ उपानहः उपानहा उपानद्भ्यां उपानद्भिः इत्यादि वकारांतो दिव् शब्दः दिव औ दिवोवकारस्य औकारादेशोभवति सौपरेद्यौः दि
वौदिवः॥ हेद्यौः वामि दिवोवकारस्य अमिपरेवाआत्त्वंभवतिद्यां दिवं दिवौ दिवः दिवा ॥ ९ वासिशब्देसकारउपलक्ष्यतेतनतथसेः सकारस्यआ
दिवदितिस्यादिवत् सकारात्पूर्वंभवतीत्यर्थः ततश्चतन्मध्येपतितस्तद्ग्रहणेनग्राह्यइतिकप्रत्ययसहितस्यसेरौसौसः इत्यादिकार्यंवस्तुतःसादिवदित्येवपाठः अस
कोइतिस्त्रीपुंसयोःनपुंसके अदकइतिसेरौइत्यत्रह्रस्वोवेत्यतोमंडूकप्लुत्यावानुवृत्तेः कप्रत्ययसहितस्यवा औत्वाभावपक्षेचस्यादिवच्चेतिचकारादधिकार्थात्ता
त्यरस्यात्वेच अमुकः केचितुकप्रत्ययस्यस्यादिवन्निदेशात्कप्रत्ययेपित्यदाद्यत्वमत्वोत्वादिभवतित्यवधानाच्चनसत्वोत्त्वेऽतएवामुक॥

शर्म्मेत्यादिप्रयोगसिद्धिरित्याहुः तदसत् पाणिनिविरोधात् अमुकस्मै अमुकस्मादित्यादि षुकप्रत्ययसहितस्य सर्वादिकार्याभावप्रसंगाच्च अमुकशर्मेत्यादि तु पृथक
शब्दत्वादेव इति सारस्वतप्रसादे हसांताः पुल्लिंगाः नहः २ धातोश्च रुसेइत्यधिकारादवनद्धमित्यादावपि उपनह्यनद्युपानत् दिवः अधावित्यनुवृत्त्यभावात् हे द्योः ॥ ॥
उरसे १ उश्च रस्य च उ असंतस्मिन् वसोर्व उमित्यतः उमित्यनुवर्त्तनेन तत्र च घुपितद्य इत्यादिके चित्तु ऊरसे इति पेठुः सूत्रे उ उरसे इति च्छेदः रसस्य हसोपलक्षणत्वात् उ इति ये
ग विभागाद्दा घुह यद्द इत्यादौ हकारेपि उत्वम् त्रिचतुरोः स्त्रियां तिसृ चतसृ ऋ र्वदिति च्छेदः स्त्रियामिति चतुरोर्विशेषणम् स्त्रीवाचकयोरित्यर्थः ततश्च प्रिया

ऊरसे दिवो वकारस्य रसे परे उकारो भवति द्युभ्यां द्युभिः द्युषु इत्यादि रेफांतश्चतुर् शब्दो नित्यं बहुवचनांतः त्रिचतुरोः स्त्रियां तिसृ चतसृ वत्
स्त्रियां वर्त्तमानयोः त्रिचतुर् [illegible]शब्दयोः तिसृ चतसृ इत्येतावादेशौ भवतः विभक्तौ परतः ऋकारस्य ऋकारवत् ततस्तु रार् इत्यार् न भवतीति
[illegible]तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः न तिसृ चतसृ छंदसि वा इत्येतयोर्दीर्घो न भवति नामि परे तिसृणां छंदसि तु भवति तिसृणां तिसृषु
[illegible]चतसृषु गिर् शब्दस्य भेदः य्वोर्विहसे धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः पदांते च गीः गिरौ गिरः हे गीः गिरं गिरौ
[illegible]ः गिरा गीर्भ्यां गीर्भिः गीर्षु एवं धूः धुरौ धुरः हे धूः पूः पुरौ पुरः हे पूः पुरा पूर्भ्यां पूर्भिः पूर्षु धकारांतः समिध् शब्दः समित् समिद् समिधौ समिधः
[illegible]मित् हे समित् समिद् समिद्भ्यां समिद्भिः समित्सु भकारांतः ककुभ् शब्दः ककुप् ककुब् ककुभौ ककुभः हे ककुप् हे ककुब् इत्यादि दकारांतास्त्यदा
[illegible]षां त्यदादेरिति सर्वत्राकारः आवंतः स्त्रियामित्याप् स्यात् त्याः सा ते ताः या ये याः एषा एते एताः अन्वादेशे एतां एनां एते एने एताः एनाः एवं
वा [illegible]स्त्रो वा यस्याः सा प्रियत्रि सा प्रियचतसेत्यादौ पुंस्यपि स्त्रीवाचकत्वाद्भवत एवादेशौ प्रियास्त्रयः स्त्रीणि वा चत्वारः चत्वारि वा यस्याः सा प्रियत्रिः प्रि
यादौ त्रिचतुरोः स्त्रीवाचकत्वाभावात् स्त्रियामपि नादेशौ न ततस्तु रार् इत्यार् न भवतीति ऋतो ङ उरित्यतः ऋत इत्यनुवर्त्तने तस्य च न परत्वेन तावन्मात्र
[illegible] ऋकारानिर्देशात् न ततस्तु रार् इति सूत्रेण आर् न भवतीत्यर्थः अपवादनिवृत्तावुत्सर्गसिद्धिरिति ॥ १७ १७ १७ १७ १७ १॥

सा० टी०

न्विरोगत्वान्न अस्शसोरस्यसोनः पुंसइत्यत्रानेकार्थः समानानुवर्ततेस्मिन्स्चनस्भ्यांशसोऽल्लोपोन त्वंचनदीर्घः ऋकारांतादेशमपहायतदतिदेशादामिनु
चत्वपिअस्शसोरस्यअतोङउःङैसोनःपुंसइत्यादिनसेराद्घेररइत्यादिचभवति॥ः॥य्वोः इइश्च उश्च यूनयोः य्चव् चवृ तस्मिन्सिलोपेपिप्रत्ययलक्षणमितिदी
त्याहिसः शेनेयो इदम् शब्दस्यस्त्रियामियंभवतिसौ परेसिसहितस्यइयं इमे इमाः इमां इमे इमाः अनया आभ्यां आभिः अस्यै आभ्यां॰
तितश्चीस्यः इत्यादि चकारांतः त्वच्शब्दः चोः कुरितिकुत्वंत्वक् त्वग् त्वचौ त्वचः त्वग्भ्यां त्वक्षु हे त्वक् एवं ऋच् वाच् प्रभृतयः अप्श
ऽनित्यंवहुवचनांतः अपजस् इतिस्थितेनस्महतइतिदीर्घः आपः द्वितीयाबहुवचनेपंचसुइतिविशेषणान्नदीर्घः अपः॰
हि पा अपादीनांभकारेपरेदत्वंभवति अद्भिः अद्भ्यः अद्भ्यः अपां अप्सु शकारांतो दिश्शब्दः दिशाकः दिशदृशस्पृशमृशइत्या॰
भीरसेपदांतेचकत्वंभवति दिक् दिग् दिशौ दिशः हे दिक् हे दिग् दिशं दिशौ दिशः दिशा दिग्भ्यां दिग्भिरित्यादि षकारांतस्त्विष्श
साद्ङ इतिडत्वंवावसानेटकारः त्विट् त्विड् त्विषौ त्विषः हे त्विट् हे त्विड् हे त्विषौ हे त्विषः त्विषं त्विषौ त्विषः त्विषा त्विड्भ्यां त्विड्भिः इ
त्यादि आशिष् शब्दस्यसजुष्शब्दवद्रूपत्वेयं आशीः आशिषौ आशिषः आशीर्भ्यां आशीष्षु आशीर्षु हे आशीः स्त्रीलिंगस्यादस्
शब्दस्यसौनविशेषद्विवचनादौटेरत्वेमत्वेचकृते अनंतरमावंतः स्त्रियामित्यापदीर्घत्वंविभक्तिकार्यपश्चान्मादूइतिह्रस्वस्यदीर्घस्य
उकार ऊकारश्च असौ अमू अमूः अमुं अमू अमूः अमुया अमूभ्यां अमूभिः अमुष्यै अमूभ्यां अमूभ्यः अमुष्याः अमूभ्यां अ
मूभ्यः अमुष्याः अमुयोः अमूषां अमुष्यां अमुयोः अमूषु इतिहसांताः ॥ ९ घिः य्वोरितियोगविभागात्सुपीः सुपिसोइत्यादौसलोपे॰ राम २८
सस्यविसर्गेपिइकारस्यदीर्घः दोषामितिरिफादेशोवा ॥ः॥ इयं २ आदेशविधानसामर्थ्यात्स्यदाघत्वाभावः हसांतत्वात्सिलोपः आभ्यामित्यादावकारादेशेआ
प्रातिपदिकन्यायेनासहितस्यत्वकारादेशे अद्भीत्यत्रादितियोगविभागादात्वेनेष्टसिद्धिः॥ भिदपाम् ३ अपामिति ॥

बहुवचनांत निर्देशान्नित्यबहुवचनांतस्यैवदत्वंस्यान्नगौणत्वेऽनतुक्रमवादीनामितिनस्यनदुत्तरपदस्यचेतितदुत्तरपदस्वप्रभृतीनामपिभवतीतिभा
वः षष्ठीनिर्दिष्टत्वादंत्यस्यदिशाम चोः कुरित्यतः कुरित्यतः कुरित्यनुवर्ततेबहुवचनात्प्रयोगतोदृष्टषतुः स्लिहप्रभृतयोऽप्यूह्याः ॥ इतिसारस्वतप्रसादेहसां
ताः ॥ ०ः ॥ स्त्रीलिंगाः अयमदृतित्नुमयमदृत्यत्र नपुंसकस्येत्यस्य अयमदतिविशेषणादित्यर्थः ॥ अन्हः सस्ताविन्यतः सदृतिब्रह्मन् शब्दस्येतिनाम्नोनो
लोपशधाविन्यनेनेत्यर्थः अन्यथाब्रह्मभ्यांब्रह्मभिरित्यादावड्डीन्यादिप्रसंगः अधाविनिनिषेधस्यनोक्तमनित्यमितिनाम्नोनोलोपशितियोगविभा

स्त्रीलिंगाः अथहसांतानपुंसकलिंगाः प्रदर्श्यंतेरेफांतावारशब्दः नपुंसकात्स्यमोर्लुक्वाः वारीवारि २ अयमङ्इतिविशेषणा
त् नुमनभवतिवारावार्भ्यांवार्भिः वारेइत्यादिचतुरशब्देचतुराम्शौचेत्याम् चत्वारिचत्वारिचतुर्भिः चतुर्भ्यः चतुर्भ्यः चतुर्णाः
चतुर्षुनकारांतोऽहनशब्दः अन्हः सः अहनशब्दस्यनकारस्यसकारोभवतिरसेपदांतेचसोर्विसर्गः अहः इमौवेड्ग्योः अन्ही अ
हनी अहानि अन्हा अहोभ्यां अहोभिः अन्हे अहोभ्यां अहोभ्यः अन्हः अहोभ्यां अहोभ्यः अन्हः अन्होः अन्हां अन्हि अहनि
अन्होः अह सुब्रह्मन् शब्दस्यरसेपदांतेचनस्यलोपोवक्तव्यः ब्रह्मब्रह्मणी ब्रह्माणिपुनः ब्रह्म ब्रह्मणी ब्रह्माणिब्रह्मणा ब्र
ह्मभ्यां ब्रह्मभिः इत्यादिसम्बोधनेधौनपुंसकेनलोपोवावक्तव्यः हेब्रह्मन् हेब्रह्म एवंचर्मन् वर्मन् शर्मन् कर्मन् ॥ ९ ॥

गाद्वासंबुद्धौनपुंसकानांनलोपोवेतिहेब्रह्म हेब्रह्मन् ॥ छंदसीतिसर्वत्रेत्यत्रसिलोपो आगमजस्यापिनस्यछांदसोलुक् निमित्ताभावन्यायस्यवा
नित्यत्वाद्दीर्घस्यानिवृत्तिः अथवावा अ आइतिच्छेदः ततश्वशिलोपे निमित्ताभावन्यायेनतुमुपधादीर्घयोर्निवृत्तौ अकारस्य आकारः अथवा
वा आरतिच्छेदः एवंचङेलोपः शेश्वाभवतीत्यर्थः ततश्वशिपरत्वाभावादागमजमनित्यमित्यनित्यत्वाद्वानुमभावेसवर्णदीर्घः अधावित्यत्र
॥ङेरुपलक्षणात्वाच्छंदस्त्वाल्लोपशसंज्ञापूर्वकत्वेनानित्यत्वाद्वा ॥ ९८९ ॥ ९ ॥

पू.
सा.टी. व्योमन् इत्यत्र नलोपाभावः परमे भूतानीति तिः श्यंतत्वद्योतनार्थम् त्यदादीनामिति लुकि न तन्निमित्तमिति प्रतिषेधादित्यर्थः इति हसांता नपुंसकलिंगाः
सा.प्र. अथेति त्रिलिंगास्वरांतहसांतनिरूपणानंतरं नाम्नि च युष्मदि चास्मदि च भागे रित्यादीनामभ्यः पृथक्कार्यकारित्वाद् अनयोः पृथगुक्तिर्युक्तैव स्वमेव रूपं स्वरूपं विस्त
२९ रभयाद्धीरणात्वादिपरित्यागेन सत्वोद्रिक्तधर्मराहित्येनार्थः स्वरूपमात्रवाचित्वेन चेत्यर्थः वाच्यलिंगत्वादिति वचनं वाक्तनस्यां अलिंगत्वात् स्वविषये लिंगद्योतका

व्योमन् दामन् नामन् प्रभृतयः नांतादंदंताच्छंदसि ङि श्योर्लोपो वक्तव्यः छंदस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ परमे व्यो
व्योमन् सर्वा भूतानि त्यदादीनामस्य मो लुकि कृते टेरत्वं न भवति स्यादाविति विशेषणात् द्विवचनादौ टेरत्वे कृते सर्वशब्दवद्रूपं नेयं त्यत् त्ये त्या
नि पुनः त्यत् त्ये त्यानि त्येन त्याभ्यां त्यैरित्यादि एवं तत् ते तानि २ यत् ये यानि २ एतत् एते एतानि २ किं के कानि २ इदम् इमे इमानि त्रीण्यादौ स
र्वत्र पुंवत् चकारांतः प्रत्यच् शब्दः प्रत्यक् प्रत्यग् अचेरल्लोपो दीर्घश्च प्रतीची नुमयमः प्रत्यंचि २ तकारांतो जगत् शब्दः जगत् जगती जगंति पुनः
२ जगता जगद्भ्यां जगद्भिरित्यादि महद्वच्छुद्धेनुम्स्महत इति सिविषये दीर्घो न महत् महती महांति २ इत्यादि षकारांतो हविष् शब्दः सजुष् च हः
विः हविषी हवींषि २ इत्यादि सजूः सजुषी सजूंषि २ एवं सकारांताः पयस् तेजस् वर्चस् प्रभृतयः पयः पयसी पयांसि २ पयसा पयोभ्यामित्यादि अद
स् शब्दस्य स्य मो लुकि कृते स्कोर्विसर्गः द्विवचनादौ टेरत्वे कृते मत्वोत्वे अदः अमुनी अमूनि पुनः २ अमुना अमूभ्यां अमीभिः अमुष्मै अमूभ्या अमी राम
भ्यः अमुष्मात् अमूभ्यां अमीभ्यः अमुष्य अमुयोः अमीषां अमुष्मिन् अमुयोः अमीषु शेषं पुल्लिंगवत् इति हसांता नपुंसकलिंगाः अथ युष्म २९
दस्मदोः स्वरूपं निरूप्यते तयोरवाच्यलिंगत्वात् त्रिष्वपि लिंगेषु समानं रूपम् ॥ १ भावादित्यर्थः अयमर्थः सर्वस्य त्रिगुणारब्धत्वेन सत्वोद्रिक्तवा

चित्वे पुंस्त्वं रजउद्रिक्तवाचित्वे स्त्रीत्वं तमउद्रिक्तवाचित्वे नपुंसकत्वं भवति अनयोस्तु धर्मिमात्रवाचित्वेनालिंगत्वम् अथवा उपचयापचयाद्यभाववाचित्वाद् अलिंगत्वं
अत एवोक्तं अलिंगे युष्मदस्मदी केचित्तु वाच्यमित्युच्यते भेद्यं तल्लिंगं भजते नतु यः विशेषणत्वमापन्नो वाच्यलिंगः स उच्यते इति विशेष्यलिंगत्वाद् अलिंगत्वमित्याहुः तदस्तु

ष्टुक्तादिशब्दानामपिवाच्यलिंगत्वेनालिङ्गत्वप्रसक्त्याआवाद्यभावप्रसंगात् अत्रापिस्त्रीवाच्यत्वेआप्प्रसंगाच्च॥ ❖ ॥त्वमहं २ सांकेतिकंप्रथमाद्विवचनांतंसि
नाजसाङ्‌याङ्‌सेतिसहार्थेतृतीयानिर्देशात्समासेप्रधानत्वेगौणत्वेचानयोःसदैवएतेआदेशाभवंतीतिसूचितंततश्चपरमत्वंपरमाहंतथात्वांमांयुवांआवांयुष्मा
नस्मान्वातिक्रांतइतिविग्रहेअतित्वंअत्यहम् एवंजसादिष्वपियुवावौ २ द्वयोःवचनंद्विवचनंद्व्यर्थवाचित्वमित्यर्थः ततश्चगौणत्वेद्व्यर्थवाचिनोर्युष्मदस्मदोर्द्विव-
चनपरत्वाभावेपियुवावौस्तएवयथायुवांआवांअतिक्रांतंअतिक्रांतान् अतिक्रांतेनेत्यादिविग्रहे अतियुवांअत्यावांअतियुवान् अत्यावान् अतियुवया अत्या

त्वमहं सिनायुष्मदस्मदोः सिसहितयोस्त्वमहमित्येतावादेशौभवतः यथासंख्येन त्वं अहं युवावौद्विवचनेयुष्मदस्मदोर्द्विवचन
परेयुवावइत्येतावादेशौभवतः आमौयुष्मदस्मदोःपरऔआम्भवतियुवांआवांयूयंवयंजसाजसासहितयोर्युष्मदस्मदोर्यूयंवयंइत्येता
वादेवादेशौभवतःयूयंवयंत्वन्मदेकत्वेयुष्मदस्मदोस्त्वत्मत्इत्येतावादेशौभवतःएकत्वेगम्यमानेएकत्वंनामएकार्थवाचित्वंनत्वेकवच
नतेनत्वत्पुत्रोमत्पुत्रइत्यादौत्वन्मदादेशौभवतएवआम्भौयुष्मदस्मदोष्टरात्वंभवतिअमिसकारेभिसिचपरेत्वांमांयुवांआवांत्यदादे-
रत्वेकृतेशसीतिदीर्घत्वंशसोनोवक्तव्यःयुष्मान् अस्मान्त्वन्मदादेशकृतेएटाङ्योःयुष्मदस्मदोष्टेरत्वंभवतिटाङिइत्येतयोःपरयोःअया
देशःत्वयामयायुवाभ्यांआवाभ्यांयुष्माभिःअस्माभिःतुभ्यंमह्यंङया २ ङेसहितयोर्युष्मदस्मदोस्तुभ्यमह्यमित्येतयोःपरयोःअयादेशःत्वया
मयायुवाभ्यांआवाभ्यांभ्यसम्भ्यम् युष्मदस्मद्भ्यापराभ्यसःभ्यंभवतिशकारोभकारादित्वव्यावृत्यर्थःतेनान्वित्वेनभवतःयुष्मभ्यंअस्मभ्यं

वयेत्यादिनत्तुद्विवचनपरत्वाभावेप्यादेशेयुवयोरावयोर्वापुत्रःयुष्मत्पुत्रइत्यादावपिद्व्यर्थवाचित्वाद्युष्मदस्मदोर्युवावौस्यातामितिचेन्नैवंप्यौवित्यतोवानुवृ
त्तेर्व्यवस्थयातदभावात् अमौ २ नन्वम्विधावपिसवर्णदीर्घत्वेनेष्टसिद्धावाम्विधिवैयर्थ्यंविधानसामर्थ्याच्चाम्शसोरस्येत्यस्याप्रसंगादन्यथामादेशमेवविद-
ध्यादितिचेन्नैवंअमादेशत्वामामेतिप्रसंगात् नचलक्षणप्रतिपदोक्तन्यायेनलाक्षणिकत्वात्तदसंभवःअस्मादेवज्ञापकादग्रहणोन्यायस्याप्रवृत्तेः॥ १ ॥

अत एव कुलमित्यादावम्शसोरस्येत्यकारलोपः त्वन्मत् २ एकत्वे एकार्थवाचित्वेदृत्यर्थः तत अत्वा मतिक्रांतो अतिक्रांता नित्यादिविग्रहे अतित्वां अति त्वानित्यादि यद्वा चयुष्मान स्मान्वेति विग्रह्हसता युष्मदस्मदोर्द्वेकार्थवाचित्वाभावाद्युवावत्वन्मदादेशानामभावादति युष्मान् अत्यस्मान् अतियुष्म यंत्यादि आम्स्मौ २ आत्रम् स्मौ अम च भिस्तस्मिन्नि नाभिसुपलक्ष्यते ननु अ एव विधीयतनाम् विधानसामर्थ्याच्चटेरननुवृत्तौ षष्ठीनिर्दिष्टन्यायेनां त्यस्यादेशेनेष्टसिद्धौ दीर्घविधिर्वैयर्थ्यमिति चेन्मैवम् युष्माभिरित्यादावकारांतत्वेन भिसो भकारस्याकारप्रसंगात् शसानइति सोनः पुंसइत्यस्य पु ल्लिंगविषयत्वेनानयोश्च लिंगविशेषाभावाच्चत्वाप्राप्तावारंभः भ्यसः ॥ ङसिभ्यसोः श्लुरित्यत्र ङसिसाहचर्य्याद्भ्यसं चम्या एवेत्यवधारणात्यरिशेषाच्च तुर्थ्या भ्यसश्भ्यम् भवतीत्यर्थः अनेकाक्षरादेशत्वाद्गुरुत्वेन सर्वादेशत्वसिद्धौ शित्करणप्रयोजनमाह शकारइति व्यर्थसन्किंचिदिष्टं ज्ञापयतीतिन्याः

ङसिभ्यसोः श्लुः पंचम्यां ङसिभ्यसोः श्लुर्भवति शकारः सर्वादेशार्थः त्वत् मत् युवाभ्यां आवाभ्यां युष्मत् अस्मत् त
व मम ङसाङसाम सहितयोर्युष्मदस्मदोः तव मम इत्येतावादेशौ भवतः तव मम युवयोः आवयोः सर्वादित्वात्सुट्
सामाकं युष्मदस्मद्भ्यां साम आकं भवति युष्माकं अस्माकं त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु ॥

यादित्यर्थः अपवाद निवृतावुत्सर्गप्रवृत्तिरित्येतत्त्वमपि नेत्यर्थः ॥ ॥ ङसिभ्यसोः २ नानुबंधकृतमनेकाल्त्वमित्युकारानुबंधत्वादनेकवर्णादेशत्वाभा वात्षष्ठीनिर्दिष्टत्वेनांत्यस्यप्राप्तौ शित्वात्सर्वस्येत्यभिप्रेत्योक्तं शकारः सर्वादेशायइति त्वन्मदादेशेत्यदाद्यत्वं संयोगांतलोपो वा नन्वेवंलोप एवं विधीयतांए कत्ववाचित्वात् त्वन्मदादेशे चेष्टसिद्धिः स्यादेवेति चेन्न सत्यमभ्यसि प्रत्ययलक्षणात्वेन त्यदाद्यत्वप्रसंगात् यद्यपिलुकि क्रियमाणेन प्राप्नोति तथाप्यतियु वदत्यावदित्यादिसिध्यर्थं श्लुविधिः साम् २ सुडहित आम् साम सत् आकं भवतीत्यर्थः ससुट्कस्यादेशविधानाद्धीणत्वे च सुडभावादाकमोऽप्राप्तेरेटाद्यौ रित्यत्र एइति योगविभागादेरेत्वे अयादेशे च अतित्वयामति युवयामति सुष्मयामित्यादि केचित् ६ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ६ ॥

तुसमुदायनिर्देशस्याभाविसुत्वनित्यत्वार्थत्वादामएवाकंविधेर्गौणत्वेप्याकंभवत्येवेति अतित्वाकमित्याद्याहुः अकविधानेनैवेष्टसिद्धेएकंविधानंभाविसुप्ति
वत्त्यर्थपक्षेतत्करोतित्र्यंतस्यक्विपित्रिलोपेहलंतस्यापिसिद्ध्यर्थंगौणत्वेद्वित्वादिवाचित्वेयुवावादिविधानमुक्तमुक्तचिंतायाम् यथाप्यद्दियुष्मदस्मदोस्तुद्वित्वव
दतीस्मासमयातःभवतस्तदायुवावौतदितरसंख्येसमासार्थे अभिवदतीत्येकत्वंसमासतस्तदानयोस्त्वन्मत् इत्यादेशौभवतोद्वित्ववहुत्वान्वितेसमासार्थे २ ङ
सङेसजस्मिषुचात्तस्त्वममतुभ्यंतथामह्यंयूयंवयंत्वमहमितिसर्वत्रैवसुपादेशादितिउदाहरणानितुतत्रतत्रोक्तान्यूह्यानिषष्ठ्यादिसहितयोर्युष्मदस्मदोस्तेमया
दिविधानेयथाऽमितेमयोर्वाधितत्वान्वा[illegible]विशेषादेशौभवतस्तथाषष्ठ्याद्येकवचनवहुवचनयोस्तवममादिविशेषविधिभिस्तेमयादयोवाध्येरन् ततश्च

अथानयोरादेशविशेषविधिः प्रदर्श्यते युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवान्नौवसनसौतत्रैकवचनेनसहतेमेभवतः द्विव
चनेनसहवांनौवहुवचनेनसहवस्नसौ स्वामीतेसःसमायातः स्वामीमेसांप्रतंगतः नमस्तेभगवन्भूयोदेहिमेमोक्षमक्षयं १ स्वामीवांसज
हासौचेदृष्टौनौदानयाचनाम्राजावांदास्यतेदानंज्ञानंनौमधुसूदनः २ देवोवामवताद्विष्णुर्नरकान्नौजनार्दनः स्वामीवोवलवान्राजास्वामी
नोसौजनार्दनः ३ नमोवोब्रह्मविद्भ्योज्ञानंनोदीयतांधनंसानंदान्वःप्रपश्यामःपश्यामोनःसुदुःखिनः ॥४॥ १ षष्ठीचतुर्थीद्वितीयाभिरितिसामा
न्यवचनमेतत्द्विवचनमात्रविषयमेवस्यादेवंचयथासंख्यत्वात्षष्ठीद्विवचनसहितयोस्तेमयौप्रसज्येयातामित्यतआह ॥ अथानयोरादेशविशेषविधिरि
ति आदेशास्त्वममादयस्तेषांतेमयाद्यादेशविशेषविधानमित्यर्थः एवंचनवाध्यवाधकभावादिदोषः युष्मदस्मदोः तेमयादीनांप्रत्येकंयुष्मदस्मद्भ्यांसंबंधा
द्यथासंख्यत्वमषष्ठ्यादीनांचत्रिवचनात्मकत्वेनतेमयादित्रिकाणांप्रत्येकंयथासंख्यत्वमनुसंधेयम् षष्ठीत्यस्यास्वरत्वात्पूर्ववत्त्वम् केचित्तुवैपरीत्यविधाने
ननियमेनेष्यतेवुधैः अतोभवंतिसर्वासुविभक्तिषुवसादयः अतएवगयेकेनविनीतौवामित्यादिमहाकविप्रयोगइत्याहुः १ अत्रप्येवंत्पतोवानुवृत्तेस्तस्यच
व्यवस्थया अन्वादेशविकल्पेन अन्वादेशेतुनित्यंविद्यमानपूर्वप्रथमांतात्परयोरन्वादेशेपिविकल्पेनषष्ठीचतुर्थीद्वितीयाभिरिति ॥ ॥

सू·
सा·टी· सहार्थे तृतीयानिर्देशाद्विभक्तिलोपेन भवंति युवयोः पुत्रः युष्मत्पुत्रः इत्यादौ अनन्वादेशेन मयादीन् क्रमेणोदाहरति। स्वामीते इत्यादिवाः श्लोकैः ॥ ॐ ॥ त्वामा र
सा·प्र· श्र मेति तृतीयान्तेमयोरपवादः शेषं पूर्ववत् मदेनञ्चालीढो युक्तः मदोन्मत इत्यर्थः नादौ रत्रादाविति सामान्यतः आदिमात्रभूतयोरादेशनिषेधात् त्वां पातु मां पात्वित्यादौ
३१ वाक्यादिभूतयोरपि न नादावित्यत्र नेति योगविभागात् संबोधनपदादित्याद्युक्तं यथा देवास्मान्पाहि नृहरे विस्मोऽस्मान् रक्ष सर्वदा विशेष्यपूर्वं संबोधनेत्र पूर्वसं
बोधनानां त्वरयोस्तु भवंत्येव योगविभागस्येष्टसिद्धिहेतुत्वात् यथा हरे कृपालो नः पाहि सर्वदा रक्ष देव नः। चादिभिः र च वा ह अह एवेति पंचवा[illegible]यः आवयोर्युवयोश्च

त्वामा मा श्र मा सहितयोर्युष्मदस्मदोस्त्वामा आदेशौ भवतः पश्यामि त्वा मदालीढं पश्य मामद भेदकं पश्यामि त्वा जगत्पूज्यं पश्य मा जग
त्पते नादौ पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भ वंति रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता स एव नाथो भगवानस्माकं पापना
शनः पादादाविति किं पांतु वो नरसिंहस्य नखलांगलकोटयः हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः चादिभिश्च चादिभिरपि योगे नै
ते आदेशा भवंति तव चायं प्रभुर्विष्णुर्मम [illegible] यवचतवयेशत्रवो राजन् [illegible] ममतेप्यतिशत्रवः चादिर्निपातः चादिर्गणो निपातसंज्ञको
भवति च वा ह अह एव एवं नूनं [illegible] नानानास्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् शनैस् स्वर्
अंतर् प्रातर् पुनर् भूयस् अहोस्वित् उत सह ऋते अंतरेण अंतरा नमस् अलम् कृतम् मा नो ना प्रतिषेधे ईषत् किल खलु वै आरात् भृशं पतत्न राम ३१

शोवेशोहशब्दस्यैव च अदेशः आवयोरेवं हरिर्मामेव रक्षतु साक्षाद्योगेऽयं निषेधः युक्तयुक्ते तु हरो हरिश्च मे स्वामीत्यादौ भवंत्येव अनुक्तसमुच्चयार्थो चकारान्नेति
योगविभागाद्वा अत्र चास्तु पन्नानार्थैर्धातुभिः साक्षात्परंपरया वा योगे नैते स्युः यथा चेतं सा त्वां समीक्षते भक्तस्तव रूपं ध्यायति चाम्सुपन्नानार्थैस्तु भक्तस्त्वा पश्यति चक्षु
रित्यादि प्रयोगतो ज्ञेयं नामाख्यातनिपातोपसर्गात्मक चतुर्विध शब्दानुशासनं तावच्छब्दशास्त्रं तत्र नाम निरूपितं वक्ष्यति चाख्यातम् निपातोपसर्गाणामपि स्वा
ल्पत्वात् तदंतर्गते रूपणे प्राप्ते चादीन् प्रसंगतो निरूपयन् निपातसंज्ञासूत्रमवतारयति चादिः अद्रव्यार्थो नामेव चादीनां निपातत्वदर्शनाद् द्रव्यार्थः ॥ ६७२ ॥

श्चादिर्गणोनिपातसंज्ञोभवतीत्यर्थः ततश्चचश्चोरशशांकयोरित्याद्यभिधानाच्चादीनांचौरादिद्रव्यवाचित्वेनिपातत्वंनद्रव्यंचोक्तंवस्तूपल[illegible]यत्रसर्वनामप्रयु
ज्यतेद्रव्यमित्युच्यतेसोर्थोभेद्यत्वेनविवक्षितइतिभेद्यत्वेनविशेष्यत्वेनेत्यर्थः अत्रयद्यपिनिश्चयेनपतंत्यनेकेष्वर्थेष्विति निपातानामन्वर्थसंज्ञा[illegible]नादनेकार्थत्वम्
तथापिप्रसिद्धप्रयोगानुसारेणवालव्युत्पत्तयेकियंतोप्यर्थाःकथ्यंतेअन्वाचयेसमाहारेतरेतरसमुच्चयेविनियोगेतुल्ययोगितावधारणहेतु[illegible]दस्यपूरणेष्वुक्तंन
वस्वर्थेषुचाव्ययंतत्रान्वाचयोमुख्यसिद्धावप्रधाननिष्पत्तिःसमुदायप्रधानःसमाहारःप्रत्येकप्राधान्यइतरेतरयोगःएकत्रानेकप्रचयस्समुच्च[illegible]क्रमेणोदाहरणानि
भिक्षामटगांचानयपाणीचपादौचपाणिपादंरामस्वकलस्वरामकश्मौईश्वरंगुरुंचभजत्वंचाहंचसंयुज्यावःध्यातश्चोपचितश्चअनीतःपंथानं[illegible]वमहिमावाङ्मन
सयोःग्रामोगंतव्यःशीतंचभीमःपार्थस्तथैव[illegible]द्वोपमानावधृतिविकल्पानवल्कप्रिषुसमुच्चयेचाव्ययंवाषट्स्वर्थेषुप्रकीर्तितंसावाशंभोस्त[illegible]वान्मूर्त्तिर्जलमयी

चादिर्गणोनिपात[illegible]भव[illegible]दिर्गणोविभक्त्यर्थेनिपात्यतेतस्मिन्निति तत्रयस्मिन्नितियत्रकस्मि[illegible]
तिकुत्रक्वकुहअस्मिन्निति अ[illegible]स्मिन्कालेकदातस्मिन्कालेतदायस्मिन्कालेयदासर्वस्मिन्काले[illegible]
एकदातेनप्रकारेणतथाएवंयथाकथंअनेनप्रकारेणइत्थंतस्मादिति ततः एवंकुतः अतः इतः॥ ॥

समजानांमन्येतुहिनमथिनींपद्मिनींवान्यरूपांगंतव्यंवायवैर्व्रीहिभिर्वाकस्यचेहभुजवीर्य्यशालिनःवायुर्वादहनोवापादस्यपूरणेहोतंविनि[illegible]चातिक्रमेमैत्रेयी
तिहोवाचत्वंहग्रामंगच्छस्वयमास्तेउपविशतिउपाध्यायंहभूमौविनियोगेतथाचारातिक्रमेपूजनेप्यहत्वमहग्रामंगच्छस्वयमहरथेनयात्या[illegible]हपदातिंगमयति
अहमाणवकमध्यापयअयोगस्यव्यवच्छेदेऽत्यंतायोगान्ययोगयोःएवावधारणेचोक्तमव्ययंचतुरर्थकम्तत्रविशेषणसंगतस्यायोगव्यवच्छे[illegible]क्रियासंगतस्यात्यं
तायोगव्यवच्छेदोऽर्थःविशेष्यसंगतस्यचान्ययोगव्यवच्छेदोर्थःशंखःपांडुरएवनीलंसरोजंभवत्येवपार्थएवधनुर्द्धरःकर्त्तव्यमेवएवंप्रकारेचा[illegible]शांगीकारनिश्चये
प्रक्रांतस्यपरामर्शेनिर्देशेप्यव्ययंविदुःएवंकुरुअग्निरेवंविप्रःएवंपठएवंकुर्म्मःएवमेतत् एवंवादिनिदेवर्षौएवंतावत् नूनंतर्केऽर्थ[illegible]॥ १ ७ १ ॥

मर्थेस्यापि विनिश्चये नूनं शरन्नफुल्लाहिकाशाः नूनं हंतास्मि रावणं पृथग्विना च भेदार्थे नानेक विनार्थयोः त्वन्नः पृथङ्नास्ति बंधुः विनावातं वि
नाव र्षे नानाविधं देहमृतां समाजे नानारी निष्फला लोकयात्रा पुण्याशीः क्षेममांगल्ये स्वस्ति प्रत्यभिवादने स्वस्त्यस्तु ते धार्मिक मत्प्रसादात् स्वस्ति ते
ऽर्जुन तया सह वृहस्व सस्तु ते सौम्य चिराय जीव स्वस्ति श्रीकुसुमपुरात् ज्ञानमस्तु नाविप्राः स्वस्तीत्येते प्रयुंजते अस्तीति विद्यमानार्थे दोषारात्रावु
दीरितं मृषा मिथ्या च वितथे रहो ऽन्योन्यार्थयोर्मिथः अस्ति क्षीरा गौः दोषामन्यमहः मृषोद्याः मिथ्यावादी मंत्रयते मिथः मिथः प्रहरतः प्रश्नका
त्स्न्याधिकारेषु प्रतिज्ञायां समुच्चये मंगलानंतरारंभे षट्स्वथैष्वथाव्ययं अथ शक्तोसि भोक्तुं अथ कृत्स्नं ब्रूमः अथ स्नानविधिः गौड़ो भवानथेति ब्रूमः
भीमो ऽथार्जुनः अथ परस्मैपदानि स्नातो ऽथ भुंक्ते अथ शब्दानुशासनं अथोद्गत्यर्थे वदेयमन्वादेशे तथैव च दूमं वेदमध्यापय अथो एनं व्याकरणं
महः स्यात्पूर्वेद्दिनेष्वस्तु परस्मिन्दिवसे तथा उच्चैर्नीचैर्महत्यल्पे स्वः स्वर्गपरलोकयोः स्वोभवत् श्वोगंता उच्चैः पुरुषः नीचैर्गच्छति छायेव या स्वर्जे
लधेर्जलेषु स्वर्ष्णातस्य ह्यपुत्रस्य अंतर्मध्ये तथा प्रातः प्रत्यूषे श्वोर्थ एव च पुनर्विशेषे ऽप्रथमे भूयोपि पुनरर्थकं अन्तर्वाप्यः प्रातः संध्यामुपासीत प्रा
तर्मीमांसे किं पुनर्ब्राह्मणाः पुनरुक्तं भूयो दर्शनं आहोश्विन्नु वितर्के चेदर्थेपि परिकीर्तितं अयं स्थाणुराहोस्वित्पुरुषः आहोस्विद्देववदेः सहसाकंसमंस
त्रासार्थे साद्धमेव च पुत्रेण सहागतः एवमन्येपि मध्येन्तरा विनार्थे च प्रह्वीभावे नमः स्मृतं अंतरा त्वां मां हरिः त्वामंतरा तामरसायताक्षीं नमो देवेभ्यः
अलं भूषणपर्याप्ति निषेधे शक्तिवारणे अलंकारः अलमस्य धनं आलप्यालमिदं वस्त्रो येत्सदारानपाहरत् अलं मल्लो मल्लाय अलमतिप्रसंगेन ऋतं
निषेधे मा नो ना स्तदर्थाः परिकीर्तिताः ऋतमतिविस्तरेण अविप्रद्रुवभाषसे विप्रवन्न ब्रूषेद्दत्यर्थः माकुरु नो अत्र स्थातव्यम् नैकः सुप्तेषु जागृयात् ईषद राम
ल्पे किलेति स्माद्वार्तासंभाव्य हेतुषु रुचिन्यक्करणालीकेष्वपि प्रोक्तं मनीषिभिः ईषद्गौरः जघान कंसं किल वासुदेवः पार्थः किल विजेष्यते तत्किल कवि ३२
नोक्तं एवं किल केचिदंति त्वं किल योत्स्यसे गोत्रस्खलितं किलायुभंक्त्वा निषेधवाक्यालंकारजिज्ञासानुनयेषु च नियमे निश्चये हेतौ विषादेपि खलु
दितं खल्वत्कारः खलु वाचिकं अथो खल्वादः सखल्वधीते वेदं न खलु न खलु मुग्धे साहसकार्यमेतत् प्रवृत्तिसाराः खलु मादृशां धियः न खलु दास्यो त्वद
धीनं खलु देहिनां सुखम् न विदीर्य्याः कठिनाः खलु स्त्रियः वैस्यात्संबोधने पादपूरणेऽनुनये ऽपि च रावं वै विप्रा वहस्य तिर्वै देवानां पुरोहितः न वै ॥ ३॥

पुनः कार्यमिदं हि साहसम् आराद्दूरे समीपे च भृशमत्यर्थवाचकम् आराच्छत्रोः सदा वसेत् प्रतीनानारात्स्थापयेत् भृशमाह महीयतिम् यत्कारणं तथान
त्यात्स्वराणां प्रतिरूपकाः स्वरा निपातसंज्ञास्तु रहव्यार्थस्य वाचकाः यत्स भासु प्रथसे तत्पूज्योऽसि संबोधने तथा स्यार्थे अमोक्तमव्ययं बुधैः ई भर्त्सने त
शास्त्रे वेदे शेषोत्कावपि कीर्तितम् उह र्षी कौ तथा तर्के संक्रुद्धो पदपूरणे मंत्रस्तोमे ऋकारः स्याल्लृकारोऽपि तथा मतः एऐओऔ च चत्वारो ह्यति संबोधनार्थकाः
यथासंभवमन्येष्वर्थेष्वेतेऽव्ययात्मकाः इत्येवमादिरिति इतिशब्दो गणसमाप्तिसूचकः प्रकृतपरामर्शको वा एवमीदृशान्यादीयस्य स तथा आदिना श
श्वत् श्रौषट् वौषट् वषट् प्रभृतयः प्रयोगतो ज्ञेयाः एतेषु केचिद्द्योतकाः केचिद्वाचकाः केचिदनर्थकाः तदुक्तं केप्येषां द्योतकाः केपि वाचकाः केप्यनर्थ
काः आगमाद्वके पिस्तुः संभूयार्थस्य वाचका इति अथ प्रत्ययान्तनिपातानाह तत्रादिरिति विभक्त्यर्थे देशकालाद्यधिकरणाद्यर्थे हि भवत् युष्मदस्मदो

सार्वविभक्तिकस्तसित्येके पूर्वस्मिन्निति पुरस्तात् परस्मिन्निति परस्तात् आहि च दूरे दक्षिणाहि वसंति चाराडालाः किम् सामान्ये
चिदादिः कश्चित् कश्चन क्वचन तदधीनकार्त्स्न्ययोर्वा सात् राजाधीनं राजसात् सर्वं भस्मकरोति इति भस्मसात् उर्युरर्थे गीकरणे उरी
कृत्य उररीकृत्य सद्यादिः काले निपात्यन्ते सद्यः अद्य सपदि अधुना सांप्रतं शीघ्रं झटिति पूर्वेद्युः अन्येद्युः परेद्युः उभयेद्युः यर्हि तर्हि का

वर्जेपि त्वाऽन्यस्मात्सर्वादेर्बहुशब्दाच्च सप्तम्यर्थे त्रल् निपात्यते तद्धितेन दंता अव्ययसंज्ञा इत्यर्थः तस्मिन् तयोस्तेषु तस्यां तासु वेत्यर्थे तत्र यस्मिन् ययोः
येषु यस्यां यासु वा यत्र कस्मिन् कयोः केषु कस्यां कासु वा कुह कुत्र क्व ॥ ॐ ॥ सार्वविभक्तिक इति सर्वासां विभक्तीनामर्थे भवतीति सार्वविभक्तिकः पूर्वतः
पश्यन्नग्रतो गच्छेत्यादि प्रयोगादित्यर्थः दक्षिणस्यां दक्षिणाहि चाराडाला इत्यनेन दूरार्थे सप्तम्यर्थे आहि प्रत्ययान्तनिपात इति सूचितम् आमा दूरे
णेते षां निवासात् किम् इति सर्वप्रत्ययान्तात् किम् शब्दात् सामान्ये विशेषाप्रकाशनेऽर्थे चिदादिः प्रत्ययगणो भवतीत्यर्थः कौचित् काचित् किंचित् कानि
चित् कस्मिंश्चित् कस्यांचिदित्यादि किमइति सामान्योक्तेः क्वचन कुतश्चनेत्यादि तदधीनेति तस्याधीन इत्यर्थे तस्य कार्त्स्न्यमित्यर्थे चेत्यर्थः राजाधीनं रा
जसात् सर्वं भस्म भस्मसादित्यर्थः किलात्वः स इत्यत्र वेड्डो रित्यतो वानुवृत्तेरग्निसादित्यादौ सात् सस्य षत्वाभावः पक्षे राजकीयं भस्मसमयं ॥ ६ ॥ ७ ॥

पृ
सा.टी.
सा.प्र.
३३

प्रादिः प्र आदियस्य स प्रादिर्गण उपर्युक्तसंज्ञस्स्यादित्यर्थः उपसृज्यते इत्युपसर्गः इत्यन्वर्थसंज्ञातो धातूयस्स्थानांतं क्रियायोगेनां प्रत्येवोपसर्गत्वं ततश्च प्रगट यको यस्मात्स प्रनायकः इत्यादौ गमनक्रियायोगेनयनक्रियायायोगाभावान्नां प्रत्युपसर्गत्वाभावाण्णत्वाभावः प्रादिकमणि दीर्घे शं भृशं संभवत् प्रिषु वियोग शुद्धिशक्तीच्छाशांतिपूजाग्रदर्शने क्रमेणोदाहरणानि प्रयातः प्रबला मूषकाः प्रभुर्देशस्य प्रवदंति दायादाः हिमवतो गंगा प्रभवति प्रभुक्तमन्नं प्रोषितः प्रसन्न मुदकम् प्रशक्तो विप्राय प्रार्थयते कन्यां प्रशांतोग्निः प्रांजलिः प्रवालं प्रलोकयति वधे गतो दर्शने च विक्रमाभिमुखे भृशे अधीन मोक्षणप्रातिलोम्यकेषु परा मतः पराहतः परागतः पराहृष्टः पराक्रांतः परावृत्तः पराजितः पराधीनः पराकृतः पराङ्मुखः अपो वियोगे विकृतौ विपरीतनिदर्शने आनंदे वर्ज्जने चौर्य्ये वा रणे स्पर्धी रितः अपयाति अपकृतवान् अपशब्दः अपदिशति अपहसति अपत्रिगर्त्तं वृष्टो देवः अपहरति अपसरति संयोगे ऐक्यप्रभवसत्यप्रत्य क्षसिद्धिषु भूषांगीकरणाश्लेषक्रोधाभिमुखवीचिसम् संगतः पुत्रेण संवदंति सख्यः संभवत्यग्निः काष्ठे गां संजानाति संपश्यते संसिद्धिः संस्कृता कन्या

प्रादिरुपसर्ग्गः प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप अंतर आ
विर अयं गण उपसर्गसंज्ञकः प्राग्धातोः उपसर्गा धातोः प्राक् प्रयोक्तव्याः तदव्ययं तदिदं चादिरूपमव्ययसंज्ञं भवति ॥श्री

संगृणाति संधत्ते संक्रुद्धः संयाति वेदाधिष्ठानसामीप्यपश्चाद्भावानुबंधने साम्याभिमुखहीनेषु विसर्गे लक्षणेप्यनुः अनुवाकमधीते अनुष्ठा नंदेशे अनुमेघं वर्षति अनुरथं अनुशयः अनुकृतिः अनुवत्सो मातरं धावति अन्वर्ज्जुनं योद्धारः अनुज्ञातः अनुधनमसतां गतिः ज्ञानाबलंब राम
शुद्धावदर्शे व्याप्तिपराभवेष्ववो ज्ञेयो वियोगे च लोकयोगानुसारतः अवगतोऽर्थः अवलंब्य पष्टिं याति अवदातं अवलंबते अवकीर्णं अवघ्नंति अव ३३
यातः निर्वियोगात्ययादेशातिक्रमेलाभनिश्चये निः संगः निर्मेघम् निर्द्दिष्टः निःक्रांतः निर्वंशः निश्चितम् दुरीषदर्थे कृच्छ्रेर्थे कृशासंपत्तिसंकटे दुर्गतिः दु र्जीवनः दुर्बलः दुर्गीतः दुर्गतः दुर्द्दिनम् नानावियोगातिशयभृशमोहेशवाङ्मृधे पैशुन्यास्मरणे भूषे बदर्थानाभिमुख्यके अनवस्थासुख्यशौर्य्यदर्शने

॥ विरुदाहृतः विचित्रा गतिर्भगवतः पाणिनेः वियुक्तः विकीर्णः वितटानद्यः ॥ ६ ॥

विमनस्कः विभुः विवरंति विगापति विस्मितः विभूषितः विलापितः विमुखः विभ्रांतः विशिष्टः विक्रांतः विलोकपति आङिच्छाभयवाकोषदर्थोश्लेषादिकर्म्म
णिवंधनेऽभिविधौ शणउपकृच्छ्रसामीप्यसंस्त्रये अभिमंत्र निर्वृत्याशीर्दीनानुभवविसयेप्रतिष्ठादेशमर्यादास्पर्द्धमुख्योह्रुकमेणि आकांक्षते आविग्नः आजा
नातिआनाम्रनस्य्यः आलिंगति आरभते कवचमावभाति आकुमारं यशः पाणिनेः आचरतिकपटेन आहतः आसन्नावयम् आवसथः आमंत्रणम् आधा
वति आशास्ते आदत्ते आशीतम् आएवं किल्ननत् आसदम् आदिष्टः आमुक्तेर्दुःखम् आव्हयंते आगच्छति आरोहति राश्यधस्व भृशादेशनिस्यको
शल्लवंधने अंतर्भावेसमीपेनिर्देशेनोपरमास्त्रयेनिकरोमणीनांनिपततिनिगृहीतः निदिशति निविशति निपुणः निवद्धः निपानमुदकम् निकृष्टः निद
शीनम् निवृत्तः पापात् निलयः अधिरध्ययने ऐश्वर्य्ये वशित्वस्मरणाधिके उपाध्यायादधीते अधिपतिः अधीनः मातुरध्येति अधिकृतम् अपि संभवगर्हाशी
मृतिभूषासमुच्चये अपियोजनमस्ति अपिपापिनू भद्रमपिमरणामपि अपिनह्यति हारंतदपिविक्रमातिक्रमेबुद्धौ भृशार्थातिशयेष्वति अतिरथः अतिकां
मति आतिगहनम् आतितन्नम् आतिमनुते ज्ञानम् प्रशंसानुमते पूजा भृशाकृच्छ्रसुभेषुसुः सुपुरुषः सुकृतम् सुसाधुः सुतप्तः सुदुष्करः सुगंधिः उत्स्रावत्यवि
योगोर्ध्वकर्म्मलाभप्रकाशने आश्चर्य्ये मोक्षणेऽभावेवलप्राधान्यशक्तिषु उद्दलः उद्गच्छति उच्छ्रियति उत्पन्नम् उच्चरति उत्सुकः उद्गतोऽश्वः उत्पथः उत्कः उ
दिष्टः उत्साहः अभिपूजामृशार्थेहाव्याधिसाम्याभिमुख्येसारूप्यवचनाहारस्वाध्यायेषु निरूपितः अभिवदति गुरुम् अभियुक्तः अभिलिप्सते अभिस्यन्दो
व्याधिः अभिजातः अभिमुखः अभिरूपः अभिधानं अभ्यवहरति अभ्यस्यति सादृश्यांगेदानहिंसांगीकृतौ प्रतिनिधौ क्वचित्व्याप्याभिमुख्ययोर्व्याप्तौ वा रणप्रति
रूप्यानेप्रतिदेवनस्य प्रतिगृह्णाति प्रतिहंति प्रतिज्ञानं अभिमनुरर्जुनतः प्रतिप्रतिश्यायः प्रतिस्पर्द्धे गच्छति प्रतिकीर्णः प्रांशुभिः प्रतिषिद्धः परिः समंततो भाव व्याप्ति
दोषकथासुचभूषाश्लेषेपूजनेचवर्ज्जनेवसनेरिभेपरिभ्रमति परिगतोऽग्निर्ग्रामंपरिवादः परिस्करोति कन्याम् परिष्वजते परिचरति गुरुम् परित्रिगर्त्तेभ्योवृ
ष्टोदेवः परिधानेवासः परिदेवनम् उपसामीप्यसामर्थ्यव्याप्त्याचार्य्यकृतौ मृतौ दोषदानक्रियावीप्सारंभाध्ययनपूजने उपकुंभं तिष्ठति उपकरोति उपकीर्णः पांशु
भिः उपदिशति उपरतः उपघातः उपहरत्यर्थं उपचारः देवंदेवमुपचरति उपक्रमते भोक्तुं उपाध्यायादधीते उपचितः पितापुत्रेणअन्हिन्यास्तिकायबुद्धौस्यादंतर्मध्येन्त

यामतमप्राकदेर्थेतथाह्याविःकविभिःपरिकीर्तितम्श्रद्दधतेश्रंतर्णीतःआविष्कारःप्रागधातोःप्रागितिसामान्योक्तेःप्रत्यवतिष्ठतेपर्य्याणद्धमित्यादौव्यवधानप्रयो
गेष्वुपसर्गत्वमएतेषुचकेचिद्धात्वर्थंबाधंतेयथाआदत्तेवितरंतिकेचितदर्थंविशिंषंतियथाविजयतेप्रभवतिकेचिद्धात्वर्थमनुवर्तंतेयथाअधीतेआशशंकिरेके
चिद्धात्वर्थस्यप्राधान्यादनर्थकाःयथाअवतिष्ठतेवितनोतितदुक्तंधात्वर्थंबाधतेकश्चित्कश्चितमनुवर्ततेतमेवविशिनष्ट्यन्योऽनर्थकोऽन्यःप्रयुज्यतेइति॥ ॥
क्त्वाद्यंतंक्त्वादयःप्रत्ययाअंतेयस्यतत्तथाक्त्वाकयप्तुमनमच्चिडाच्धावत्शस्कृत्वस आमसुइत्यादयःप्रयोगतोज्ञेयाः लिंगादिनियमाभावेओकारस्तुतिपरा
यर्वणास्त्रुतिसंमतिमाहउक्तंहीतिचादीनामव्ययीभावानांतत्रादीनांचसाधारण्यार्थंक्रमात्लिंगविभक्तिवचनसादृश्यमुक्तम्एतेनान्वर्थसंज्ञेयमित्युक्तम्इतिसा

क्त्वाद्यंतंचक्त्वाकयप्तुमनमच्चिडाच्धावतुआमहृत्वसशस् अव्ययादिभक्तेर्लुक् अव्ययात्परस्याविभक्तेर्लुग्भवतिननुशब्दनिर्देशे
अव्ययानांनचलिंगादिनियमःउक्तंहिसदृशंत्रिषुलिंगेषुसर्वासुचविभक्तिषुवचनेषुचसर्वेषुयन्नव्येतितदव्ययंउक्तान्यव्ययान्यलिं
गानिइत्यव्ययानिअधुनालिंगविशेषविजिज्ञापयिषयास्त्रीप्रत्ययाःप्रस्तूयंतेआबंतःस्त्रियांअकारांतान्नाम्नःस्त्रियांवर्त्तमानात्टाप्
प्रत्ययोभवतिजायामायामेधाश्रद्धाधाराइत्यादि अजादेश्चापवक्तव्यःअजाएडकाकोकिलाबालावत्साशूद्रागणिका॥ ६ ॥

रस्वतप्रोदेऽव्ययानिउक्तानुवादपूर्वकंस्त्रीप्रत्ययनिरूपणांप्रतिजानीतेउक्तानीत्यादिलिंगेषुस्त्रीपुंनपुंसकेषुविशेषःस्त्रीलिंगस्यविशेषणेनज्ञापयितुमिच्छ राम
यास्त्र्यधिकारविहिताःप्रत्ययाःस्त्रीप्रत्ययाःयद्दर्शनेनलोकेस्त्रीयमितिप्रत्ययःसधर्म्मःस्त्रीत्वमसचगोत्वादिवत्सामान्यविशेषःस्तनकेशाद्यभिव्यंग्यःतदुक्तम् ३४
स्तनकेशादिसंबंधोविशिष्टावास्तनादयःतदुपव्यंजनाजातिर्गुणावस्थागुणास्तथाशब्दोपजनितोऽर्थात्माशब्दसंस्कारइत्यपिलिंगानांलिंगतत्वज्ञैर्विकल्पाः
सप्रदर्शिताइतितथाद्वयमयमिदमितियेषुव्यपदेशोदृश्यतेलोकेस्त्रीपुंनपुंसकानिप्रोच्यंतेतानिलोकेनगोत्वादिस्वाश्रयैर्यद्वत्सामान्यमुपलक्ष्यतेव्यंजकैरनु
मृतत्वात्स्त्रीत्वंपुंस्त्वादिकंतथा ततोव्यंजकवैचित्र्याद्येनात्रस्त्रीत्वमेवहिव्यज्यतेनतुपुंस्त्वादिःसोऽर्थःस्त्रीत्यभिधीयते अजादेरिति जाते रत्योपधा ॥

दित्यादिविशेषविधानादीपिप्राप्ते वचनम्। बालावत्साकन्यकेत्यादौ च प्रथमवयोवाचित्वादीपि चकारादनुक्तसमुच्चयार्थात्संभस्त्राजिनशणपिंडेभ्यः फला
त् संफला भस्त्रफला इत्यादि एकफलेत्यपि केचित्। अन्यत्र दासीफलीत्यादि नञ्ज्येष्ठाकनिष्ठामध्यमेति पुंयोगेपि तथासत्प्राकांडप्रांतशतैकेभ्यः परात्पुष्पादीपि स
त्पुष्पा एकपुष्पा अत्र तु शंखपुष्पीत्यादि तथा नञ्पूर्वान्मूलादीपि अमूला अन्यत्र दर्भमूली ऋ विवाच्यायां पादन्तादीपि द्विपदा ऋक् ऊमन्नंतादन्नन्ताच्च वहुव्रीहेर्वा
नोवेति डिलोपः वहुसीमे वहुसीमानौ वहुयज्वे वहुयज्वानौ उपधालोपिनोऽनन्नाह्याबीयोनोवेति वाशब्दव्यवस्थया आप्यवडित्लोपो नङीपि वहुराजे वहुराज्ञ्यौ
वहुराजानौ इत्यादि प्रयोगानुसारतोनुसरणीयम्॥ ॥कापि ३ ककारेणाव्यवहिते आप्कापृतस्मिन्नत इ वहवः परिव्राजका यस्यां सा वहुपरिव्राजकेत्य

काप्यतः कापि परे पूर्वस्याकारस्य इकारो भवति कारिका पाचिका पाठिका कालिका नालिका वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः
आपं चैव हसंतानां यथा वाचा निशा दिशा अवगाहः वगाहः अपिधानं पिधानं ह्रस्वो वा स्त्रियां कापि परे तरादौ च पूर्वस्य ह्रस्वो वा भ
वति वेणिका वेणीका नदिका नदीका श्रेयसितरा श्रेयसीतरा श्रेयसितमा श्रेयसीतमा नौकादौ न भवति वाग्रहणादियं विवक्षा नि
श्चयेन पतनेत्यनेकेष्वर्थेष्विति निपातानामनेकार्थत्वात्॥ ९ आपः स्यादिपरत्वेन तेन व्यवधानान्न आपा प्रत्ययेन साहचर्यात्ककारोपि प्रत्य
यसंबंध्येव वोध्यः एवं च शक्लुशक्ताविन्यादेः प्रचाद्य चि आप्रत्यये च शकेत्यादौ न ह्रस्वो वेत्यनो वानुकर्षणान्ममेयं मामिकेत्यत्रेदमर्थे ममकादेशे आपि च प्रत्य
यककाराभावेऽपि भवति तथा नरान्कायति नरिकेत्यत्रापि अथवा कापीति सामान्योक्तावपि वाशब्दव्यवस्थया शकेत्यादाविन्त्वाभावः यकासकेत्यादौ प्रत्ययसं
बंधिकाप्यपि न एवं अधित्यका उपत्यका जीवका भवका देवका यज्ञका क्षिपका ध्रुवका चटका दंडका दृष्टका हलका पिप्पलका एडका अलका करका मेनका
कन्यका एरकेत्यादिषु प्रयोगानुसारेणानेत्वम्। तारका ज्योतिषि अन्यत्र तारिका वर्णका तांतवे अन्यत्र वर्णिका वर्तका शकुनौ प्राचां उदीचां तु वर्तिका अष्टका
पितृदैवत्ये अष्टिका अन्यत्र इत्यादिष्वर्थभेदेन मतभेदेन चेत्वाभावतद्भावव्यवस्था तथा सूतकादीनां वा सूतिका सूतका पुत्रिका पुत्रकाइ॥ १ १ ७ ३॥

दारिका वृंदारकातथायकपूर्वस्यस्त्री प्रत्ययाकारस्यस्थानेयोऽकारस्तस्यापिवा आर्य्यका आर्य्यिका चटकका चटकिकातथाभस्त्रैषाजाज्ञाद्वास्वाएषाम
नञ्पूर्वाणामपिवाभस्त्रकाभस्त्रिका अभस्त्रिका अभस्त्रका एषका अजका अजिका ज्ञकाज्ञिकाद्वके द्विके स्वका स्विका एषाद्वानएतयोर्नञ्पूर्वयोर्नेत्वम् अने
षका अद्वके भस्त्रादेरुपसर्ज्जनत्वेपिवा निर्भस्त्रका निर्भस्त्रिका अभाषितपुंस्काद्विहितस्यापस्थानेयोकारस्तस्यापिवा गंगका गंगिका अगंगका अगंगिका परमगं
गका परमगंगिका उक्तपुंस्कस्यतु ग्रुभ्रिकातथावहुव्रीहौनित्यम् अद्विका तथा दाक्षिणात्यिका इहत्यिका त्यक्त्यिके त्यादौ त्यक्त्यपोर्नित्यम् तथा सुनायिका सुया
किके त्यादौ धात्वंतयकोरपिनित्यमित्यादि यथाप्रयोगं व्यवस्था वसेया वाशब्दात् लोका द्वा अभाषितपुंस्कादतः स्थाने आद्वा गंगाका ह्रस्वा वेति व्यवस्थयाह्र

ऋणाईपू नकारांताहकारांताद्दणांताच्च स्त्रियामीप्प्रत्ययोभवति दंडिनीदंतिनीकरिणीमालिनी ईपिराज्ञोऽलोपोवक्तव्यः राज्ञीशु
नीकर्त्री हर्त्री औपगवी यस्यलोपः इत्यश्च यंतस्यलोपोभवति सर्वे यकारेच परेष्विः तः षकारटकारउकार —— ऋकारानुवंधाः
स्त्रियामीप्प्रत्ययोभवति षवराकीट् कुरुचरीउगोमती अप्ययोरानित्यम् अप्रत्ययप्रत्ययसंवंधिनोऽवर्णात्परस्यशतुर्नित्यं
नुमीकारेईपिचपरे ऋप चंतीपठंतीइत्यादि नदादेः नदादेर्गणात्स्त्रियामीप्प्रत्ययोभवति नदीगौरीगौतमी ॥९ स्वाभावोवापक्षेप्रागुक्त
म् ॥ आवंतः स्त्रियामित्यत्र आविति योगविभागात्कचिद्धसांतेभ्योप्याप्प्रत्ययइत्यभिप्रेत्य भागुरिसंमतिमाहवष्ठीतिहसांतानामितिस्वमतसिद्धहसप्रत्याहा राम
राभिप्रायेणपाठस्तुहलंतानामितिहृस्वः अकापीनिपूर्वतः तरादाविति वाशब्दव्यवस्थयोक्तम् वतरतमरूपकल्पादयः वहुव्रीहौकप्रत्ययेवासुसोमपाकः सुसोमप ३५
कः नौकारैकाग्लौकेत्यादौ चनाविद्वहरेत्यादौ पुंवद्भावोपीत्यादि वाशब्दादवसेयम् वाशब्दस्यविकल्पार्थत्वेपिनिपातसंज्ञावद्वहर्थकत्वादनेकार्थत्वमित्याहुः नि
श्चयेनेत्यादि ॥७॥ ऋणाः । न च आ च अण च एतेषां समाहारः ऋणात्तस्मात् अत्रनोवेत्यतो मराइकञ्जत्यादानुवृत्तेः स्वस्रादिभ्यः संख्यावाचिनकारान्तेभ्यश्च न आवंतः
स्त्रियामित्यत्रापि तत एवानुवृत्तेः पंच स्त्रिय इत्यादौ नलोपेऽकारांतत्वेनापि प्राप्तेपि नकारांतसंख्यावाचित्वान्नेत्यादि व्यवस्थापनीयम् ॥ ६ ७ ६ ७ ६ ॥

ईपिराइइति राज्ञइतिराजन्प्रकारस्यनांतस्यवकारमकारान्तयोगाद नुत्तरस्येत्यर्थो विवक्षितः। ह्निदाम्नी भूरिदाम्नीत्यादिसिद्धिः औपगवीत्यत्राकारलोपार्थमा
हयस्यइत्र अश्वयणितो —— वेत्यनोवानुवृत्त्यास्त्रीप्रत्ययसमासांततद्धितप्रत्ययसंबधियकारस्वरेष्वेवनविभक्त्यादिस्वरेअनोवायुःदध्यत्रेत्यादावप्रसंगइतिव्य
वस्था। षिद्गौ तः। षच्चइच उश्च आ च ष्टुनदित्यस्यतस्मात् अत्रापिपूर्ववद्दानुवृत्तेस्त्रयूषलज्ञायामित्यादेः पचाद्यचित्रपेत्याक्षेषित्वेपिनस्तनंधयीत्यत्रधेटस्तु
स्यादित्यादिव्यवस्थापनीयम् नदादेः नदादेराकृतिगणत्वात्सोपर्णीयीपीवरीजित्वरीशर्वरीद्वादशीपंचमीप्रभृतयोऽविहितलक्षणानदादौज्ञेयाः॥ ६॥ इन्द्रादे
रिति इन्द्रादेर्गणादानीप्प्रत्ययोवक्तव्यइत्यर्थः तेचइन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्य्यादयः वक्तव्यत्वाल्लोकाच्चकाराद्धिमारण्ययोर्म
हत्वेमहद्धिमंहिमानी अरण्यानीयवाद्दोषेदुष्टोयवोयवानीयवनाल्लिप्यामयवनानीमातुलोपाध्यायाभ्यांच यामातुलानीमातुलीउपाध्यायानीउपाध्यायीआचा

इन्द्रादेरानीप् इन्द्रादेर्गणादानीप्प्रत्ययोभवति इन्द्राणी भवानी शर्वाणी ङप्समाहारे गुणश्च समाहारार्थे ङप्प्रत्ययोभवति गुण
श्चत्रयीयंचकुलीपुंयोगेच अकारान्तपुंयोगे ईप्प्रत्ययोभवति शूद्रस्यस्त्री शूद्री गणकी जातेरयोपधात् जातिवाचिनोऽयकारो
पधादकारांतस्त्रियामीप्प्रत्ययोभवति मेषीशूकरीहंसीकुक्कुटीब्राह्मणी अपकारोपधादितिकिं क्षत्रियावैश्या॥ ६॥

र्य्यादणत्वञ्च आचार्य्यानी अर्य्यक्षत्रियाभ्यांवास्वार्थे अर्य्याणी अर्य्याक्षत्रियाणी क्षत्रियापुंयोगेतुईवेव ब्रह्माणी सूर्याणीइत्यपिकेचित् इत्याद्यूह्याः ननु अनीवेवविधी
यतांसवर्णदीर्घत्वे चेन्द्राणीत्यादिसिद्धेः विधानसामर्थ्याच्चयस्यलोपइत्यलोपोनस्यात् अन्यथानीपमेवकुर्य्यादितिचेत्सत्यम् इन्द्रमाचष्टे इन्द्रयति इन्द्रयतीतीन्द्रस्त
स्येन्द्रस्यस्त्रीइन्द्राणीत्यादावपिदीर्घ आनीविधिः ब्रह्माणीत्यादौनोवेतिटिलोपेदीर्घ अवर्णार्थेचईप्समाहारइतिसमाहारेऽर्थेवाच्येईप्प्रत्ययः पूर्वस्यगुणोवक्तव्यइत्य
र्थः। त्रयाणांसमाहारस्त्रयी। एवंद्वयीत्याद्यपिपुंयोगेपुंवाचकोपियःशब्दः पुंयोगात्स्त्रियांवर्ततेतेनतस्मादीप्स्यादित्यर्थः शूद्रस्यगणकस्यस्त्रीत्यर्थः चकारात्पालक
शब्दांतान्नगोपालिकाजातेः अयोपधादितिसामानाधिकरण्योक्तेर्जातिशब्देनाभिधेयाभिधायकाभेदोपचाराज्जातिवाचकात्स्यांतेइत्यभिप्रेत्याह जातिवाचिनो

कुशकाशम्· वर्णानां चानुपूर्व्येणैव पूर्वत्वम् ब्राह्मणक्षत्रियविट्शूद्राः जायापती पुष्यपुनर्वसू इत्यादौ विकारांतो कारांतयोरपि न पूर्वत्वमित्याद्यूह्यम् ॥
ननु समासवाक्ये चकारः किं न प्रयुज्यते इत्यत आह उक्तार्थानामिति इतरेतरयोगादेः समासेनोक्तत्वात्तस्याप्रयोग इत्यर्थः। देवताद्वन्द्व इति देवतावाचकाना
मन्योन्यं द्वंद्वसमासे पूर्वपदांत्यस्वरस्य दीर्घो वक्तव्य इत्यर्थः वाशब्दस्य व्यवस्थितविकल्पार्थत्वादग्निवायू वाय्वग्नी इत्यादौ न प्रादेश्च तथा नोसुनमामिति ष
त्वविधानाद्वायकात्पदादेः सस्य षत्वाभावाव गमादग्नीषोमावित्यादौ कथं षत्वमित्यत आह अग्न्यादेः सोमादीनामिति सस्येति शेषः वक्तव्यस्य प्रयोगानुसारि
त्वाद्दीर्घो नादेवाग्निशब्दान्नेह अग्निसोमौ माणवकौ आदिशब्दात् अग्निष्टवः। अग्निष्टोमः। ज्योतिष्टोमः आयुष्टोमः मातृष्वसा पितृष्वसा। अंबष्टपद इत्येव

उक्तार्थानामप्रयोगः स्त्री च पुरुषश्च स्त्रीपुरुषौ भोक्ता च भोग्यश्च भोक्तृभोग्यौ धवश्च खदिरश्च धवखदिरौ देवताद्वंद्वे पूर्वपदस्य दीर्घो
वक्तव्यः अग्निश्च सोमश्च अग्नीषोमौ इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती अग्न्यादेः सोमादीनां षत्वं वक्तव्यं इतरेतरयोगे द्विवचनं ए
कवद्भावो वा समाहारे वक्तव्यः शशाश्च कुशाश्च पलाशाश्च शशकुशपलाशाः तेषां समाहारे शशकुशपलाशं स नपुंसकम् अयस्यैक
वद्भावः स नपुंसकं भवति अन्यादीनां विभक्तिलोपे कृते पूर्वस्य समागमो वक्तव्यः अन्यश्च अन्यश्च अन्योन्यं परश्च परश्च परस्परम् ॥

माद्ययोर्द्वयोः इतरेतरयोगे द्विवचनमिति। द्वयोः समासे द्वयोरप्यवयवयोः प्राधान्याद्द्विवचनम् बहुवचनांते बहुवचनमूह्यम् समाहारस्य समुदा
यप्रधानत्वात्तस्य चैकत्वादेकवचने प्राप्ते विकल्पमाह एकवद्भावो वेति केचित्तु सर्वो द्वंद्वो विभाषयैकवद्भवतीति इतरेतरयोगेप्येकवद्भाव इत्याहुः वाश
ब्दो व्यवस्थया प्राणितूर्यसेनांगादीनां द्वन्द्वस्य नित्यमेकवद्भावः वृक्षमृगतृणधान्यव्यंजनपशुशकुन्यश्ववडवपूर्वापराधरोत्तरादीनां वा चूताशोकं चूताशोकौ
इत्यादि फलसेनावनस्पतिमृगशकुनिक्षुद्रजंतुधान्यतृणानां बहुप्रकृतिक एवैकवत् बदराणि च आमलकानि च बदरामलकम् द्विप्रकृतौ तु बदरामल
॥ के स्तः दधिपयआदीनां च नैकवद्भावः दधिपयसी इत्यादि अन्यश्च ॥ ६ ७ ६ ॥

अन्यश्चेतिविग्रहे द्वंद्वे विभक्तिलोपे एकवद्भावे पूर्वस्यान्यशब्दस्य सगागमे सस्य विसर्गे उत्वे ओकारे यलोपे चान्योन्यमिति वक्तव्यत्वात्कर्मव्यतिहारे एवं सकृ अन्योऽन्यं
विधानमस्ति। अन्यत्रान्योन्यम्। परस्परमित्यत्र कुप्वोः ᳲकᳲपौ वेति वा शब्दात् ᳲकᳲपाभावे औत्सर्गिकः सः शशकुशपलाशमित्यादौ नपुंसकत्वार्थमाह ॥ ॥ एक
त्वे २ अत्र तत्पुरुषस्याप्युपलक्षणात्। वाटाङ्कोरित्यतो वानुवृत्तेर्व्यवस्थया च्छायां तत्पुरुषः पूर्वपदार्थबाहुल्ये क्लीबं स्यात् शलभानां छाया। शलभच्छायं तथा
इनसभे ईश्वरसभं। रक्षःसभस्त्रीसभमिति संघाते तथा सेनासुराच्छायाशालानिशानां वा क्लीबे द्विजसेनं द्विजसेनेत्यादि असेनेत्यादौ चनेति प्रयोगतो ज्ञेयम्। चा
र्थे द्वन्द्व इत्यत्र वा गुणादित्यतो मण्डूकप्लुतिन्यायेन वानुवृत्तेः प्राणितूर्यसेनांगानां समाहार एव द्वन्द्वः। दधिपयआदीनामितरेतरयोग एव वृक्षमृगादीनां चोभ

एकत्वे द्विगुद्वंद्वौ एकत्वे वर्तमानौ द्विगुद्वंद्वौ नपुंसकलिंगौ भवतः। संख्यापूर्वो द्विगुः संख्यापूर्वः समासो द्विगुर्निगद्यते समाहारे
ऽतद्धितार्थे द्विगुः समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारान्तादीप्प्रत्ययो भवति दशानां ग्रामाणां समाहारो दशग्रामी अकारान्तो
द्विगुः स्त्रियां भाष्यते पचामृयः समाहृताद्वृति [illegible]नपंचानां गवां समाहारः पंचगु। नपुंसकत्वाद्ध्रस्वत्वम् त्रिफलेति रूढिः पात्रादीना
मीप्प्रतिषेधो वक्तव्यः बहुव्रीहिर[illegible]प्रधानो यः समासः स बहुव्रीहिसंज्ञकः समासो भवति बहु धनं यस्य स बहुधनः अ
थेतिव्यवस्थया एकत्वे द्विगुद्वंद्वावित्यत्र द्विगोः स्मृतत्वात्प्रसंगतो द्विगुं निरूपयिष्यंस्तल्लक्षणमाह। संख्यापूर्व इति वा स्तिधनं यस्य स अस्तिधनः 
चकयोरभेदोपचारात्संख्याशब्देन तद्वाचकं पदमुपादीयते। तत्पूर्वकोऽन्वयो द्विगुसंज्ञो भवतीत्यर्थः। एतच्च समाहारेऽतद्धिते द्विगुरित्यनेनैकवाक्यतयान्वेति तत
श्च समाहारेऽर्थे संख्यापूर्वो द्विगुः स चेदकारान्तस्तदन्तादीबन्त्ययः। एवं च द्विभार्य्य इत्यादौ संख्यापूर्वत्वेपि शशकुशपलाशमित्यादौ समाहारेपि द्विगुत्वाप्रसंगः
। समाहार इत्यस्य तद्धितार्थोत्तरपदे पलक्षकत्वात्पंचसु कपालेषु संस्कृतः पुरोडाशः पंचकपाल इत्यादौ तद्धितार्थे द्विगुः पंचगावो धनं यस्येति पंचगोधन

॥ इत्यादावुत्तरपदे परे समाहारे॥ ४ ॥ ॥

अत्रापि वोर्गुणादित्यतो वानुवृत्तेरावंताद्विगोरीप् वा। त्रिखट्वं त्रिखट्वी तथा अन्नं नोत रस्य नकारलोपः ई पूर्वा पंचकर्म पंचकर्मीयात्रादावुत्तरपदे च न पंचपात्रं त्रि
भुवनं चतुर्युगमित्यादि पात्रादिश्चाकृतिगणः त्रयाणां फलानां समाहारस्त्रिफला अत्रादिना परंपराप्रयोगतो हि गुत्वे अकारांतत्वे पीवभावनपुंसकत्वाभावौ।
स्त्रीत्वं च बहुव्रीहिः अन्यस्य समस्यमानपदातिरिक्तपदस्यार्थः अन्यार्थस्तस्मिन् अस्ति धनं इत्यत्र अस्तीति तिङंतप्रतिरूपकमव्ययं सतार्थे अन्यपदार्थस्य प्रधा
नत्वे समस्यमानपदार्थस्य विशेषणत्वोपलक्षणत्वाभ्यां द्वैविध्याद्विशेषणत्वेन तद्गुणसंविज्ञान इत्याह तस्य प्रधानस्येति तस्य प्रधानस्यान्यपदार्थस्य एकदेशः
समस्यमानपदार्थः। विशेषणतया सद्भावर्तकत्वेन यत्र समासे ज्ञायते स तद्गुणसंविज्ञान इत्यर्थः। यस्येति पाठः॥ ॥ यस्य प्रधानस्यैकदेशः कर्णादिः विशे
षणतया समस्यमानपदार्थः। तस्यान्य[illegible]स्य गु[illegible]वर्तिपदार्थः कार्यित्वेन यत्र संविज्ञायते स तद्गुणसंविज्ञान इत्यन्वर्थसंज्ञेयमिति भावः। पूर्वनिपात

यस्य प्रधानस्यैकदेशो विशेषणतया यत्र प्रति[illegible]ते स तद्गुणसंविज्ञानो बहुव्रीहिः लंबौ कर्णौ यस्य स लंबकर्णः बहुव्रीहौ विशेषण
सप्तम्यंतयोः पूर्वनिपातो वक्तव्यः। कण्ठेका[illegible]यस्यासौ कण्ठेकालः। करे धनं यस्य स करेधनः। नेद्वादिभ्यः सप्तम्यन्तस्य पूर्वनिपा०
तो न भवति। इन्दुशेखरः चक्रपाणिः। पद्मनाभः। कपिध्वजः। प्रजामेधयोरसुक् सुप्रजा दुर्मेधाः अन्त्वसोः सौ। धर्मादन् सुधर्म्मा। ४१

नियममाह॥ बहुव्रीहाविति। बहुव्रीहावित्यस्योपलक्षणत्वात् कृतत्तेत्यादौ कर्मधारयेऽपि विशेषणस्य। पूर्वनिपातः वक्तव्यत्वात् सर्वनामसंख्ययोः पूर्व
निपातः सर्वश्वेतः द्विशुल्कः। मिथोऽनयोः समासे संख्यायाः पूर्वत्वं द्व्यन्यः तयोश्चात्योपरस्याः पूर्वत्वमद्वित्राः प्रियस्य पूर्वत्वं वा गुडप्रियः प्रियगुडः गड्वादेश्च
सप्तम्यंतस्य परत्वम् गडुः कण्ठे यस्य गडुकण्ठः त्वहे गडुरित्यपि इन्द्वादिभ्यश्च सप्तम्यन्तस्य न पूर्वत्वम् इन्दुः शेखरेऽस्येन्दुशेखरः पद्मनाभः। कपिध्वजः च
क्रपाणिः। दण्डपाणिरित्यादयो यथाप्रयोगं ज्ञेयाः। प्रजामेधयोरिति। प्रजामेधा इत्येतयोः समासे सुगागमो वक्तव्य इत्यर्थः सुष्ठु प्रजा यस्य दुष्टा प्रजा
यस्येति विग्रहो असुकि यस्य लोप इति आकारलोपे अन्त्वसोः सौ इति दीर्घः। यद्यप्यसुक उकारानुबंधित्वाद्धि नो॥ १ ७ ७ ७ ७ ७ ७१॥

तुमितितुम्याप्नोतीति तथापि तत्रवादीपोः शूद्रातुरित्यतो वाऽनुकर्षणात्तत्र वक्तव्यत्वात्तत्र दुःसुमंदाल्पेभ्यः परयोः। नेह मधुसमृद्धि समेधितमेधया आगमानुशा
सनस्यानित्यत्वाच्च धर्मादिति वक्तव्यत्वात् केवलात्पदाद्यः केवलो धर्मशब्दस्तस्मादनप्रत्ययो वक्तव्य इत्यर्थः नेनेह न परमः स्वः धर्मः परमः स्वधर्मो वायस्य सः प
रमस्वधर्मः रूपवद्भार्य्य इति सिद्धरूपप्रदर्शनतत्क्रियामाह॥ ॥ अन्यार्थे त्रिचतुरोऽस्त्रियामित्यतो विभक्तिविपरिणामेन स्त्रिया इति षष्ठ्यन्तमनुवर्तते ह्रस्वो वे
त्यतः ह्रस्वइत्यभिप्रेत्य व्याचष्टे स्त्रीलिंगस्येत्यादि पुंवत् २ समासस्थान्वयेनाम्नामिति समासेइति सप्तम्यन्तं कर्मधारयस्तुल्यार्थे इत्यतस्तुल्यार्थे इति तुल्यार्थत्वं
च समानाधिकरणस्यैवेत्यभिप्रेत्याह समासेसतीत्यादि स्त्रीशब्दस्य स्त्रीप्रत्ययांतशब्दस्येत्यर्थः पुंसातुल्यं पुंवदिति। पुंवद्भावातिदेशान्नि मित्ताभावन्यायेन

अन्यार्थे स्त्रीलिंगस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति। पुंवद्वा। समासेसति समानाधिकरणे पूर्वस्य स्त्रीशब्दस्य पुंवद्भावो वा भवति पुं
वद्भावादीपो निवृत्तिः। रूपवती भार्या यस्य स रूपवद्भार्यः। वाग्रहणात्कल्याणीप्रियइत्यादौ न भवति गोः गोशब्दस्यान्यार्थे वर्तमानस्य
ह्रस्वो भवति पंचगावो यस्य स पंचगुः। सैन्या सुव्याघ्रादिपूर्वस्य पादशब्दस्य लोपो वक्तव्यः सहस्त्रं पादा यस्य स सहस्त्रपात् शोभनौ पादौ यस्य स
सुपात् व्याघ्रस्य स पादा विव पादौ यस्य स व्याघ्रपात् द्वौ पादौ यस्य स द्विपात् द्विपादौ द्विपादः द्विपादं द्विपादौ शसादौ स्वरे पदादेशश्च वक्तव्यः द्विप
दः द्विपदा द्विपाद्भ्यां द्विपाद्भिः इत्यादि। टाडकाः। समासे सति टअडकइत्येते प्रत्ययाः भवंति टकारस्तत्पुरुषे च अकारो द्वंद्व एव च डकारश्च बहुव्री

त्यधिकारेण विहितस्येपो निवृत्तिरित्यर्थः। वाग्रहणादिति। निपातनत्वादनेकार्थत्वादित्यर्थः अतश्च उक्तपुंस्कस्येवात्र रूढं पुंवत्त्वं न ((हिः ककारोऽनियमो मतः
त्याह गंगाभार्य्यः। वामोरूभार्य्यः। तथा यङ् मानिनत्वतृशसतनरादौ पुंवत् एनीवाचरति एतायते। पुंवद्भावादापृ निवृत्त्यापत्त्मादय इति निपातितस्य तस्यापि निवृ
तिः। परिडितामात्मानं मन्यते पंडितामानिनी। त्वतयोर्गुणवाचकस्येव पुंवद्भावः पटोर्भावः पटुता पटुत्वं नेह कटीत्वम् अत्र जातिवाचित्वम् अस्यायेदे हि अल्प
शः पटुतरा पटुतमा एवं चरट्जातीयकल्पदेश्यदेशीयरूपपाशादौ पटुचरी। पटुजातीया। दर्शनीयकल्पा दर्शनीयदेश्या दर्शनीयदेशीया दर्शनीयरूपा॥ ६॥

दर्शनीयपाशातथाकुक्कुट्यादीनामंडादिषुकुक्कुट्याअंडंकुक्कुटांडम् मृगपदम्मृगक्षीरम्।काकशावइत्यादयः प्रयोगानुसारेणोह्याः संख्यासुव्याघ्रादिपूर्वसे·
तिव्याघ्रादयउपमानवाचिनएतेपूर्वेयस्यतस्येत्यर्थः।शसादावितिचकारादनुक्तसमुच्चयार्थादीकारेऽपि अपितद्धितेऽपिद्विपदीकुलेद्विपदीद्विपदाऋक्।
नद्यादित्वादीपिहसांतत्वादापिचपुंवद्भावः।द्विपदोऽपत्यंद्वैपदः।वैयाघ्रपद्यः।यडकाः।टश्चअश्चडश्चकश्चतेतथा।एतेप्रत्ययाःसमासांताव्ययीभावादिभ्यो
यथायोग्यंभवन्तीत्यर्थः।अत्रापिवानुकर्षणात्सुसखेत्यादावप्रसंगः॥ॐ॥नोवा।वोऽप्यस्वरेइत्यतोयस्वरेयस्यलोपइत्यतःलोपःडितिटेरित्यतष्टेरित्यनु
नोवानांतस्यपदस्यटेर्लोपोवाभवतियकारेस्वरेपरेवाग्रहणात्क्वचिन्नभवत्युपधालोपश्च।अन्होमध्यंमध्यान्हःकवीनांराजाकवि
राजः टकारोनुबंधःईवर्थः कविराजीसङ्ग्रामःपूः राज्ञःपुरंवाकृचमनस्यवाङ्ननसंदक्षिणास्यांदिशिपंथाःदक्षिणापथःअहश्चरात्रिश्चअहो
रात्रंद्वौचत्रयश्चपरिमाणंयेषांतेद्वित्राःपंचचषट्चपरिमाणंयेषांतेपंचषाःबहवोराजानोयस्यांनगर्यांसाबहुराजानगरी अत्रटिलो
पेकृते आवतःस्त्रियामित्याप्बहुव्रः कर्त्तोरोपस्यसबहुकतत्कः कर्मधारयस्तुल्यार्थे।पदद्वयेतुल्यार्थे एकार्थनिष्ठत्वेसतिकर्मधारयः
समासोभवतिनीलंचतदुत्पलंचनीलोत्पलंरक्ताचासौलताचरक्तलता पुमांश्चासौकोकिलश्चेतिपुंस्कोकिलःपुंसःस्वपेसंयोगांतलो
पोवक्तव्यः।नाम्नश्चकृतोसमासःपादेरुपसर्गस्यनाम्नश्चकृदंतेनसमासस्तत्पुरुषोभवतिप्रकृष्टोवादोऽपवादःकुंभंकरोतीतिकुंभका
वर्ततेयेनविधिस्तदंतस्येतिनांतस्येतिचेतसीकृत्वाऽहनांतस्येतीत्यादि।अन्होमध्यमितिविग्रहेतत्पुरुषेक्वचिदमाद्यंतस्यपरत्वंमितिपरत्वेसवर्णदीर्घत्वेमध्यान्हइ
तिस्थितेअप्रत्ययोनांतत्वात्प्राप्तटिलोपनिवृत्तौ उपधाकारलोपेमध्यान्हइति।पुंस्त्वंलोकात्।कर्मधारयःतुल्यार्थेतुल्यार्थत्वंनामसमानार्थत्वंतच्चप्रायशःपदयोर्द्वै
द्वमितिपदद्वयेइत्युक्तं तेननीलोत्पलइत्यादौबहुपदेप्यदोषः।एकार्थनिष्ठेसतीतिभिन्नप्रवृत्तिनिमित्तत्वेप्यर्थेसमासमहिम्नाएकस्मिन्नर्थेनिष्ठावृत्तिर्यस्येत्य
र्थः।अनतश्चकुम्भकलशादावनतिप्रसंगः।नीलपदंनीलघटादिभ्योव्यावृत्त्यउत्पलपदंचतामरसादिभ्योव्यावृत्त्यएकस्मिन्नसितसरोजे।वर्ततइति॥ ९ ॥

एकार्थे निष्ठत्व मनीलपदस्य विशेषणत्वात्पूर्वनिपातः। रक्तलतेत्यत्र समानाधिकरणोत्तरपदे परे पुंवद्वेति पुंस्त्वातिदेशादापो निवृत्तिः। पुंसः स्वपैइत्यत्र व॰
क्तव्यत्वेन प्रयोगानुसारित्वात् स्या धातुवर्ज्जिते अम् प्रत्याहारे परे स्वपैइत्यनुसंधेयम् ततश्च पुंख्याने पुंक्षीरमित्यादौ स्वपे पि संयोगांतलोपः। नाम्नश्चेति।
प्रादिरुपसर्ग इत्यतो विभक्तिव्यत्ययेन प्रादेरित्यनुवर्त्याह। प्रादेरुपसर्गस्य नाम्नश्चेति यद्यप्युपसर्गाणामपि नामत्वमस्त्येव तथापि नामाख्यातनिपातोपस
र्ग इत्यादौ भिन्नत्वेन निर्द्देशात्पृथगुक्तिः। समास सामान्यस्य समास इति पूर्वोक्तयोगेनैव सिद्धे समास इति विशेषपरम् स चोत्तरपदार्थप्रधानस्तत्पुरुष इत्य
भिप्रेत्योक्तं तत्पुरुषो भवतीति अमादौ तत्पुरुष इत्यनीमंडूकप्लुतिन्यायेन तत्पुरुष इत्यनुवृत्तिर्वा। चकारादूरीकृत्य स्थलीकृत्येत्याद्यपि कालोभोकुमित्यादौ च

सह्रादेः सादिः। समासे सति सह्रादीनां सादिर्भवति। पुत्रेण सह वर्तत इति सपुत्रः। सहसंतिरसां सध्रिसमितिरयः। सह अंचतीति सध्य
ङ् सम अंचतीति सम्यङ् तिरस् अंचतीति तिर्यङ्। कोः कदादिः। कुशब्दस्य कुत्सितेषदर्थयोस्तत्पुरुषे कत्कवका आदेशा भवंति। कुत्सितं अ॰
न्नं कदन्नं ईषदर्थे ईषदुस्नं कदुस्नं कोस्नं कवोस्नं कोर्मंदादेशश्च मंदोस्नं रथवदयोश्च कद्रथः कद्वदः पुरुषे वा कुपुरुषः कापुरुषः पथ्यक्ष
योः कोः कादेशः स्यात् कुपथः कापथः कुअक्षः काक्षः ईषदर्थे च ईषज्जलं काजलं षड्भिरधिका दश षोडश षट् दंता यस्य षोडन् षषूदंत इति
स्थिते दंतस्य दतृ ऋ इत् षस्य डत्वं दस्य डत्वं तो नुम् षोडन् षट्प्रकाराः षोढा संख्यायाः प्रकारे धा धस्य ढः षषडुत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं

नाउत्वैः कृत्यउत्वैः कृत्वेत्यादौ च नेत्यादि प्रयोगवशाज्ज्ञेयम्॥ ॥ सह्रादेः।२। आदिना समानस्य ज्योतिर्जनपदरात्रिनाभिनामगोत्र॥ च भवतितिवक्तव्यं॥ राम ५०
रूपस्थानवर्णवयोवचनबंधुषु पिराडगंधलोहितकुक्षिवेणिपत्नीपक्षेषु तथा ब्रताच्चरणार्थे ब्रह्मचारिणि परे यप्रत्ययांते तीर्थे च सो भवति समानं ज्योतिर्यस्य सस
ज्योतिः सपिराडः सब्रह्मचारी सतीर्थ्य इत्यादि पुंवद्वेत्यतो वानुवृत्तेः क्वचिन्नित्यं क्वचिद्वा क्वचिच्च नेति व्यवस्थेयम् प्रत्ययांते उदरे वा। सोदर्य्यः। समानोदर्य्यः। रू
पनामगोत्रस्थानवर्णवयोवचनधर्म्मजातीयेषु वेति केचित्। सरूपः। समानरूप इत्यादि दृग्दृशदृक्षेषु च। सदृक्॥ छ छ छ छ छ छ छ छ॥

सहशः सहस्यः इत्यादयः प्रयोगानोज्ञेयाः। पुत्रेणसहआगतइतिविग्रहेसमासेअव्ययत्वात्सहपूर्वनिपातेसादेशेचसपुत्रइतिसिद्धम्। सहअंचतीत्यत्रसहस्य
सध्र्यादेशः सम् अंचतीत्यत्रसमः समिरादेशः तिरः अंचतीत्यत्रतिरसस्तिर्य्यादेशः एवंदेवानंचति विष्वगंचति अमुं[illegible]चतीत्यादिविग्रहेदेवद्रि विष्वद्रि अद
घ्र्याद्यादेशाः देवद्र्यङ्। विष्वद्र्यङ्। अदद्र्यङ्। तत्पुरुषेसमासेकुशब्दस्यकुत्सार्थेईषदर्थेचवाच्येकत्काकवइत्यादेशाः सुः अन्नत्रिरथवदेषुकोः कत्त्रियंका
वाऽक्षेपुरुषेपथिईषदर्थेच वाच्येऽस्तुन्यग्नावुष्णोकाकत्कवाः।१। कुत्सितमन्नंकदन्नंकत्त्रयः कद्रथः कद्वदः काक्षः कापुरुषः कापथः कुपथः ईषज्जलंका
जलंकाग्निः कवाग्निः कोष्णंकदुष्णमतृणेचजातौकत्तृणं तत्पुरुषादन्यत्रकुष्ट्रोराजाषोडन्नित्यादौषट्दंतायस्यषट्चदशञ्चषट्प्रकारेणेति विग्रहेणषु

वृहच्छब्दस्यसुडागमेतल्लोपश्चवृहतांपतिः वृहस्पतिः। महच्छब्दस्यटेराकारः समानाधिकरणेमहादेवः महेश्वरः द्यौश्चभूमिश्च
द्यावाभूमी द्यौशब्दस्यद्यावादेशः जायायाः जंभावोदंभावोनिपात्यतेदंपतीजंपतीक्वचिज्जायापती आकृतिगणोयं अलुक्क्वचि
त्क्वचित्समासेकृदंतेतद्धितेपिविभक्तेरलुग्भवतिकण्ठेकालमुक्तः अप्सुयोनिरस्येत्यप्सुयोनिः उरसिलोमायस्यासौउरसिलोमा हृदिस्पृ
शतीतिहृदिस्पृक्कंठेकालोयस्यासौकंठे[illegible]कालः वाचोयुक्तिः दिशोदंडः पश्यतोहरः वनेचरः खेचरः समानाधिकरणेशाकपार्थिवा
दीनांमध्यमपदलोपोवक्तव्यः शाकः प्रियः यस्यसः शाकप्रियश्चासौपार्थिवश्च शाकपार्थिवः॥१ त्वंसहादित्वात्षषःषोडित्यादेशेनिमित्ताभा

वस्यायस्यानित्यत्वात्टुत्वानिवृत्तिः पुंवद्धेत्यतोवानुवृत्तेश्चधाप्रत्ययेवाषड्धाक्वचिदपदांतताश्रयणात्टुत्वाभावः। तदुक्तम्। षषउत्वंदतृदशधासूत्तरपदादेः
ष्टुत्वंधासुवावक्तव्यमिति॥ ॐ॥ वृहतांपतिरितिविग्रहेदेवतायांवाच्यायांवृहतः वृहस् आदेशः सस्यविसर्गेपिसहादित्वात्सः एवंचौरेवाच्येतत्करोतीतितत्
स्करः महांश्चासावीश्वरश्चेतिविग्रहेसमानाधिकरणेजातीयदेशीययोश्चपरतोमहतोमहाइत्यादेशः। घासकरविशिष्टेष्वपिमहाघासः महाविशि
ष्टः। महामायेत्यादौमहतोशब्दस्यापि। द्यौश्चभूमिश्चेतिविग्रहे द्योशब्दस्यदिवशब्दस्यवाद्यावादेशः एवंजायाचपतिश्चेतिविग्रहे॥ ६ ७ ६॥

पू॰
सा॰टी॰ जायायाजंभावद्भावौवा॰ जंपतीदंपतीजायापतीसहादेराकृतिगणत्वमाह आकृतिगणोयमिति आकृत्यासिद्धशब्दस्वरूपदर्शनेननदंतर्ग
सा॰प्र॰ तयतइत्यन्वर्थसंज्ञातः सिद्धशब्दस्वरूपलभ्यादेशविधानंयस्मिन्स आकृतिगणइत्यर्थः अलुक्समासप्रत्यययोरितिप्राप्तस्याऽपवादत्वा॰
५१ त्हृदंनेचतत्राप्यभावात्सरसिजमित्यादौनाम्न्यकृतासमासइतिसमासेएवप्राप्तलुक्प्रतिषेधात्हृदंतेइत्यसभ्यः पाठः तद्धिते असुष्यात्र्यपत्यंत्र्यामु
ष्यायणाः शाकपार्थिवादीनामितिपार्थिवादौसमानाधिकरणेपूर्वपदस्ययदुत्तरपदंतस्यलोपइत्यर्थः शाकःप्रियोयस्यसशाकप्रियः देवान्पूजयतीतिदे
वपूजकः इत्यत्रोत्तरपदयोः प्रियपूजकपदयोर्लोपः मध्यमपदलोपइतिपाठेसमुदायापेक्षयामध्येवर्तमानस्येत्यर्थः आकृतिगणोयम्॥ ॥ आदेश्व

आदेश्वद्वंद्वे॰ द्वंद्वेसमासेपूर्वपदस्यलोपोभवति॰ चकारग्रहणाद्विकल्पेन। माताचपिताचपितरौ शिष्यमाणोलुप्यमाना
यौभिधायौश्वश्रुश्चश्वशुरश्चश्वशुरौदुहिताचपुत्रश्चपुत्रौऋतांद्वंद्वे। द्वन्द्वेसमासेपूर्वपदस्यऋकारस्यवाऽऽकारोभवति माता
चपिताचमातापितरौ द्वंद्वेसर्वादित्वंवाद्वंद्वेसमासेसर्वादित्वंवाभवतिवर्णाश्च आश्रमाश्चइतरेचवर्णाश्रमेतरेवर्णाश्रमेतराः
वैयधिकरणेबहुव्रीहौमध्यमपदलोपोवक्तव्यः कुमुदस्यगंधइवगंधोयस्यसःकुमुदगंधिः उपमानाच्च उपमानात्परस्यगंधशब्द
स्याकारस्येकारोभवति हंसस्यगमनमिवगमनंयस्याःसाहंसगमना॥ १ नि द्वंद्वेसमासेआदेरादिभूतस्यपदस्यलोपोवाच्यः वक्तव्येनुप्र राम

योगांतरइतिप्रयोगतोव्यवस्था। ऋतांद्वंद्वेइतिविद्यायोनिसंबंधवाचिनामृकारांतानांपुत्रेचपरेपूर्वपदांतस्याकारोवक्तव्यइत्यर्थः माताचपिताचे ५१
तिविग्रहेसमासेएभ्योमातागरीयसीत्यादिवचनान्मातुःप्रधानत्वात्पूर्वनिपातेआकारादेशः एवंहोतापोतारौपितापुत्रावित्यादि अन्यत्रकर्तृभो
क्तारौद्वंद्वेइति असर्वादित्वमितिच्छेदः ननश्चद्वंद्वसमासेसर्वादित्वंनभवति॰ वाइतिजसीतिशेषः वाशब्दादेवजसिवान्यत्रवर्णाश्चआश्रमाश्च
इतरेचेतिविग्रहः वैयधिकरण्यइति॰ भिन्नविभक्त्यंतपदवाच्यत्वंवैयधिकरण्यंगंधपदस्यमध्यवर्तिनोलोपेइवेत्यस्योक्तार्थत्वादप्रयोगः चकाराद्गंधस्य

दृशः चकारादेव निर्गतास्त्रिंशदंगुलयो यस्मात्स निस्त्रिंशः इत्यत्रांगुलिपदस्योत्तरस्यापि लोपः ॥ ः ॥ दिक्संख्ये इति दिग्वाचकसंख्यावाचकशब्दावित्यर्थः
संज्ञायामित्यनेन नित्यसमाससूचनात्तल्लक्षणमाह अविग्रह इति दक्षिणाग्निरित्यादौ विग्रहशून्य एको नित्यसमासः अधिस्त्रीत्यादावस्वपदविग्रहः सम
स्यमानपदान्यपदविग्रहः अन्यो नित्यसमास इति नित्यसमासो द्विधेत्यर्थः इति सारस्वतप्रसादे समाससंक्षेपः ॥ समासश्चान्वयेनाम्नामित्यत्र चशब्दात्तद्धि
तस्याप्यन्वययोग्यत्वे एव संसूचनात्समाससमाप्ताववसरसंगत्या तद्धितप्रत्ययान्निरूपयितुमुपक्रमते अथेति तद्धित इति जात्यभिप्रायेणैकवचनम् तेभ्यः पूर्वो
क्तेभ्यः नामपदेभ्योऽर्थान्तरप्रतिपादनशक्तिप्रदत्वेन हितोऽनुकूलस्तद्धित इत्यन्वर्थसंज्ञाविज्ञानात्तद्धितसंज्ञाविज्ञानात्तद्धितसंज्ञाऽणादीनामिति भावः अप

दिक्संख्ये संज्ञायां दिग्वाचकसंख्यावाचकशब्दौ संज्ञायां विषये परपदतुल्यार्थे समस्येते स समासस्तत्पुरुषो भवति स्वपदविग्रहो
नित्यसमासः अन्यस्त्वस्वपदविग्रहोऽपि दक्षिणाग्निः सप्तग्रामः इति समासप्रक्रिया अथ तद्धिता निरूप्यन्ते अपत्येऽण् नाम्नोऽपत्ये
र्थेऽण्प्रत्ययो भवति उपगोरपत्यमिति वाक्ये उपगोः अण् इति स्थिते समासप्रत्यययोरिति षष्ठीलोपः णकारो वृद्ध्यर्थः आदिस्वरस्य
ञ्णिति च वृद्धिः स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति तद्धिते परतः उकारस्य ओकारो वृद्धिः वोऽव्स्वरे उकारस्यौका
रस्य च अव् भवति यकारे स्वरे औपगवः वाशिष्ठः गौतमः शिवादिभ्यश्चेति वक्तव्यः शैवः वैदेहः ॥ त्येऽण् नाम्न इति नामप्रकरणत्वात्

अत्रापि पूर्ववन्नामशब्देन पदं प्रोच्यते वाक्ये औपगव इति तद्धितार्थबोधके इति शेषः अपत्यार्थस्याणोक्तत्वादुक्तार्थानामित्यभिप्रेत्यापदाप्रयोगः आदिस्वर
स्य ७ आदौ स्वरः आदिस्वरः आदित्वं च स्वरापेक्षयेत्यभिप्रेत्योक्तं स्वराणां मध्य इत्यादि तत्र च वासिष्ठ इत्यादौ वृद्धिः तदपि संभवदभिप्रायम् तत्स्वराः कामस्याप
त्यमायद इत्यादावाद्यं न वदेकस्मिन्निति आदिवद्भवत्येव वृद्धिः एतदपि संभवदभिप्रायम् ञ् च ण् च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन् तद्धिते परत इति तद्धितप्रक
रणत्वात् उकारैकारयोः स्थानादीनां तरतमत्वादौकारो वृद्धिरित्यर्थः वो उ वो अव् स्वरे उश्च ओश्च वो इति सांकेतिकं षष्ठीद्विवचनांतम् यश्च स्वरश्चेति समाहारः

एतत्तद्धितप्रकरणत्वात्तद्धितेष्वेवेति गोपानमित्यादावनतिप्रसंगः ओकारस्य स्वरे अविति सिद्धेऽपि यकारे विधानार्थं वचनं यद्यपि क्वचित्स्वरवद्यकारेऽ
तिस्वरत्वातिदेशाद्यकारेऽपि अव् संभवति तथापि सूत्रस्य वक्तव्यानुपजीवित्वादोकारो क्विर्युक्तैव नाम संज्ञायां स्याद्युत्पत्तौ देववद्रूपं नेयम् वसिष्ठस्या
पत्यं गोनमस्यायत्यमिति विग्रहे ऋषिवाचकत्वादिञभावे अण् यस्य लोप इति लोपः ॥ ॥ ऋ उर् उ षस्यां मातृणामपत्यमिति विग्रहे अणि संख्यापूर्व
कत्वात्तद्धितार्थविषयत्वाच्च द्विगुसमासे विभक्तिलोपे पदांतत्वमाश्रित्य षोडड्ड इति डत्वे सुरामपंद्रवरामयमित्यादाविवत्रमेत्रमावेत्यत्र च पात्रवेज
वाइत्यतो जवाइत्यनुवृत्तेः क्वचिज्जवात्रमेपरे त्रमा भवंतितिजवस्य डकारस्य सवर्णत्वात् त्रमे त्रमो णाकारः केचित्तु नामि लुप्तेऽपि प्रत्ययलक्षणन्या
येन तदाश्रितो ह्रू इति णाकार इत्याहुः अन्ये तु ह्रसेर्हैस इति षस्य द्वित्वे रसपरत्वेन पूर्वषस्य षोड इति डत्वे स्वसे च पाड् इति च पेटकारे संयोगान्तलोपे च

ऋ उर् अणि ऋकारस्य उर् भवति अणि परे षयोर्णो मातरि षाणमातुरः द्वयोर्मात्रोरपत्यं द्वैमातुरः अतइञ् नृषेः अकारांतात्
नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ् प्रत्ययो भवति यस्य लोपः देवदत्तस्यापत्यं देवदत्तिः श्रीधरस्यापत्यं श्रैधरिः दशरथस्यापत्यं
दाशरथिः पुरंदरस्यापत्यं पौरंदरिः बह्वादिभ्यश्च औपगविः कार्ष्णिः औडुलोमिः आग्निशर्मिः । एयायनणीयणीयाः ॥१॥

निमित्ताभावन्यायस्यानित्यत्वात् त्रमे त्रमावेति टस्य णइत्याहुः अतइञ् ३ अतइञ् इति योगविभागात्वैदिगो र्गिरौद्दालकिरित्यादावृषिवा
चकेभ्योऽपीञ् वा दाक्ष्योरित्यतो मंडूकलुत्यावानुवृत्तेर्व्यवस्थया शिवादिभ्योऽनृषिवाचिभ्योऽकारांतेभ्योऽपीञ् शिवस्यापत्यं शैवः श्वाफल्कः रांध
सः वृष्णिभ्यश्च वासुदेवः आनिरुद्धः कुरुभ्योऽपि नाकुलः साहदेवः वाशब्दादेव लोकाद्बाबह्वादिभ्योऽनकारान्तेभ्योऽपीञ् वाहविः औपगविः औडु
लोमिः आमि शर्मिः नांतेभ्यो नो वेति टिलोपः एवं सुधातृव्यासवरुडनिषादचंडालविंबानामित्रि अकङादेशः सौधातकिः वैयासकिः वारुड
किरित्यादिप्रयोगादृत्यम् । णायायनण २ णयश्च आयनणश्च एयणश्च णीयश्चेते तयाग र्गेश्च नडश्च अत्रिश्च स्त्री च पि ॥ ९ ७ ७ ९ ॥

तृष्वसा च ता आदौ यस्य स तथा द्वंद्वान्तत्वादादिशब्दस्य प्रत्येकं संबंध इत्यभिप्रेत्याह:॥ ॥गर्गादेरित्यादि गर्गादेर्गणात् यञ्: नडादेर्गणादायनण् अत्र्यादेर्ग-
णात् स्त्रीलिंगाच्चणायणा पितृष्वस्रादेर्गणात् ईयस्य ण च वा शब्दानुवृत्तेस्तस्य डित्वाट्टिलोपे वा पैतृष्वस्रेयः मातृष्वस्रेय इति विवेकः स्त्रीलिंगादिति स्त्रीप्रत्ययान्तो-
पलक्षणं अतएव भूमेरपत्यं भौम इत्यादावप्रसंगः लुग्बहुत्वे क्वचिदिति गर्गयस्कविदादिभृग्वत्रिकुत्सांगिरोवसिष्ठगोतमदेशतुल्यक्षत्रियेभ्यः परस्य प्रत्यय-
स्य बहुत्वविषये लुग्भवतीत्यर्थः देवते १ देवता च इदम् च देवतेद मौ देवतेदमयोरर्थः देवतेदमर्थस्तस्मिन् उक्ता अणादयो यथायोग्या भवन्तीत्यर्थः क्वचित् इ

गर्गनडात्रिस्त्रीपितृष्वस्रादेश्च गर्गादेर्नडादेरत्र्यादेः स्त्रीलिंगात् पितृष्वस्रादेश्च यञ् आयनण् एयण् ईयण् इत्येते प्रत्यया भवंति अ-
पत्येऽर्थे गर्गस्यापत्यं गार्ग्यः वत्सस्यापत्यं वात्स्यः नडस्यापत्यं नाडायनः चरस्यापत्यं चारायणः अत्रेरपत्यं आत्रेयः गांगेयः मह्या अपत्यं
माह्नेयः कपेरपत्यं कापेयः पैतृष्वस्रीयः अलुक् क्वचित् अमुष्य अपत्यं आमुष्यायणः मातृपितृभ्यां स्वसुः सस्य षत्वं वक्तव्यं मातृष्वस्री-
यः पितृष्वस्रीयः पितृमातृभ्यां व्यडुलौ पितुर्भ्राता पितृव्यः मातुर्भ्राता मातुलः पितुर्डामहन् पितुः पिता पितामहः पितुर्माता पितामही लु-
ग्बहुत्वे क्वचित् अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिद्दृष्यनृषिविषये लुग्भवति गर्गाः वशिष्ठाः अत्रेयाः विदेहाः देवतेदमर्थे
देवतार्थे इदमर्थे चोक्ता प्रत्ययाः भवंति इंद्रो देवतास्येति ऐंद्रं हविः सोमो देवतास्येति सौम्यं देवदत्तस्य इदं दैवदत्तं वस्त्रम् क्वचिद्द्वयोः पू-
र्वपदोत्तरपदाद्योः क्वचिद्वृद्धिर्भवति अग्निमरुतौ देवते ऽस्येति आग्निमारुतं कर्म्म सुहृदो भावः सौहार्दं अत्र भावे अण् वक्तव्यः ॥१॥

आदिस्वरस्येत्यत्र पदापेक्षया आदित्वे ऽविशेषाद्द्वयोः पूर्वपदादेः उत्तरपदादेश्च वृद्धिर्भवतीत्यर्थः अग्निमरुतौ देवते अस्येति तत् आग्निमारुतम् कर्मेति विशेष्यप-
दं सुभगस्य भाव इति विग्रहे भावार्थे प्रत्ययानभिधानादत्र भावे अण् वक्तव्य इति वक्तव्यत्वात् स्वार्थेऽपीत्यपिशब्दादनुक्तसमुच्चयार्थाद्वा विकाराभावसमूहादाव-
णा सिद्धेस्त्रापि नैनैव वक्तव्या व्याख्येयः सौभाग्यमित्यत्र भावे तत्त्वयणितियण् यदि तु भावेयणा वक्तव्य इति पाठस्तदा भावे तत्त्वयणीत्येव यणः सिद्धेः तेनैव वक्तव्यो ॥

पू॰
सा॰टी॰ णितः २ प्राक् उक्ता अणादयः प्रत्ययाः विषयांतरे मुख्यविषयादन्यत्यादिरूपादन्यस्मिन् विषयेइदमर्थादौ णितो णित्कार्यकृतो वा भवंतीत्यर्थः अयं च
सा॰प्र॰ त्वातिदेशे णितोऽणितोपि व्यवस्थिताव्यवस्थितविकल्पेन णित्वतदभावार्थः अजगुशब्दादिदमर्थेऽणि णित्वविकल्पाद्वृद्धिविकल्पः धनुर्वेदन्याजगवं पि
५३ नाकिकरगोचरमिति कात्यायनमते नित्यम् अमरसिंहमते तु पिनाकोऽजगवं धनुरित्युक्तेर्नेति विकल्पः विषयांतरइत्यस्य प्रत्युदाहरणं कौमुदगंध्येति तत्र वैय
धिकरण्ये बहुव्रीहौ मध्यमपदलोपश्चेति बहुव्रीहौ मध्यमपदलोपे च पूर्वकारात् गंधशब्दस्येकारांतादेशे कुमुदगंधिशब्दादपत्यार्थे गर्गादित्वात् यप्रत्यये विषयांत

णितो वा उक्ताः प्रत्ययादि विषयांतरे णितो वा भवंति अजो गौर्यस्य सः अजगुस्तस्येदं धनुः आजगवं अजगवं वा कुमुदस्य गंध इव गंधो यस्य
सः कुमुदगंधिः तस्यापत्यं स्त्री कौमुदगंध्या श्वशुरस्यायं श्वाशुर्यो ग्रामः विष्णोरिदं वैष्णवं गोरिदं गव्यम् कुलस्येदं कुल्यं त्वन्मदे
कत्वे त्वदिदं त्वदीयं ममेदं मदीयम् चतुरश्चलोपः चतुरशब्दस्य चकारस्य लोपो भवति यणीयोः परतः तुर्यः तुरीयः अन्यस्यदक्
अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे अन्यस्येदं अन्यदीयं अर्द्धजरत्या इदं अर्द्धजरतीयं कारकात् क्रियायुक्ते कारकाद् एते प्र
त्यया भवंति क्रियायुक्ते कर्तरि कर्मणि चाभिधेये कुंकुमेन रक्तं वस्त्रं कौंकुमं मथुराया आगतो माथुरः ग्रामे भवः ग्राम्यः धुरं वहतीति
धुर्यः धौरेयः । केनेयेकाः । क इन एय इक इत्येते प्रत्यया भवंति भवाद्यर्थेषु णित्वं चैषां वैकल्पिकं कर्णाटे भवः कार्णाटकः कर्णाट
को वा ग्रामादागतस्तत्र जातो वा ग्रामीणः ग्राम्यः सध्रीचि भवः सध्रीचीनः समीचि भवः समीचीनः तिरश्चि भवः तिरश्चीनः ॥ ६ ॥ राम ५३

तरत्वाभावात् णित्वविकल्पाभावः स्त्रीत्वादाप् क्वचित्तु कुमुदगंध्येति णित्वाभावोदाहरणमप्यस्तीति चिंत्यम् विषयांतरत्वाभावात् श्वाशुर्यः वैष्णवमित्यत्र नि
त्यं णित्वम् गव्यमित्यादौ च न चतुरश्चलोप इति चतुर्शब्दस्य यश्चकारस्तस्येत्यर्थः यणीययोः परतः लोपो वक्तव्य इत्यर्थः चतुर्णां संख्यापूरण इति विग्रहे स्वार्थे
पीत्यपि शब्दात् पूरणार्थे यणीयौ तयोश्च णित्वाभावादादिवृद्ध्यभावः अन्यस्य दगिति अन्यशब्दात् णीये दगागमो वक्तव्यः किं त्वादंते अन्यस्येदमिति विग्रहे कारकात्रि

त्वर्थस्तद्युक्तस्तदाश्रयः स च क्वचित्कर्त्ता क्वचिच्च कर्म्म यथा देवदत्तो ग्रामं गच्छतीत्यत्र गमनक्रियाश्रयो देवदत्तः देवदत्त ओदनं पचतीत्यादौ च विक्लित्तिरूपायाः प-
चक्रियाया आश्रयः कर्म्मभूतौदन इत्यभिप्रेत्य कर्त्तरि कर्म्मणि चाभिधेये इत्युक्तम् यत्क्रियायुक्ते कर्तृकर्म्मणी तत्क्रियाकारकाद् णादयो भवंति तद्धितांतस्यैव तेन एव वाच्ये
भवतामित्यर्थः कौंकुममित्यत्र रंजनक्रियायाः कर्तृकारकात् कुंकुमाद् रंजनक्रियायुक्ते वस्त्रेऽभिधेयेऽण् धुरमिति कर्मकारकाद् वहनक्रियायुक्ते कर्त्तर्य्यनडुहि
वाच्ये यत् एव णाणितो वेति व्यवस्थितो णित्वभावाद् आदिवृद्ध्यभावः एयगश्च णित्वाद् वृद्धिः णितो वेत्यनंतरसूत्रतो वानुवृत्तेर्व्यवस्थयाऽर्थविशेष एव न भिन्नः शरेणारभ्मे
णेत्यादौ केनेकश्च इनश्च इयश्च इकश्चेनेत यणित्वं चैषां वैकल्पिकमिति णितो वेत्यस्यात्रानुवृत्तेरिति भावः मध्यड्वेव सध्रीचीनः सम्यगेव समीचीनः स्वार्थे ई-नप्र-
यलोपश्च क्वचित् यकारलोपो भवति कन्यायाः जातः कानीनः नक्षत्राद् अण् वक्तव्यः पुष्येण युक्ता पौर्णमासी पौषी पौष्यां भवः पौषीणः इयो
वा क्षत्रात् घ यत् इति क्षत्रं क्षत्रे भवः क्षत्रियः क्षात्रः शुक्राज्जातं शुक्रियं इंद्राज्जातं इंद्रियं अक्षैर्दीव्यतीति आक्षिकः शब्दं करोतीति शाब्दिकः
तर्कं करोतीति तार्किकः वेदं जानाति वैदिकी श्रुतिः क्त्वा किमादेस्त्यतनौ किमादेरव्ययाद् भवाद्यर्थे त्यतनौ प्रत्ययौ भवतः कुत्र भवः कुत्रत्यः
कुतस्त्यः अद्य भवः अद्यतनः ह्यो भवः ह्यस्तनः श्वो भवः श्वस्तनः सदा भवः सदातनः दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः दाक्षिणात्यः पाश्चात्यः
त्यये तद्धिते परे यश्च अंचेर्दीर्घश्चेत्यकारलोपपूर्वकाद् दीर्घो तिरश्चीन इत्यत्र तिरश्चाद य इति तिरश्च निपातः ॥ ६ ॥ यलोपश्चेति । क्वचित्तद्धिते परे यकारस्य लो-
पो वक्तव्य इत्यर्थः कन्यायां भव इति विग्रहे ई नः यस्य लोप इत्याकारलोपः आदिवृद्धिः पुष्ये भवः पौषीणः इयो वेति क्षत्रशब्दाज्जाताविव इयः क्षत्रजातिः
क्षत्रियः क्षात्रोऽन्यः अक्षैर्दीव्यति शब्दान् करोति तर्कमधीते वेद वेत्त्यादि विग्रहाः वैदिकीत्यत्र नदादित्वाद् ङीप् । किमादेस्त्यतनाविति किमादेरिति कि-
म् शब्दः आदिः आद्यवयवो यस्य तन्न कारकाद् गणात्यः स च अमा इह क्व तसि त्रेभ्यः अमात्यः इहत्यः क्वत्यः कुतस्त्यः कुत्रत्यः इत्यादि एवमैषमस्ह्य
म् श्वसस्त्यः ऐषमस्त्यः ह्यस्त्यः तया परुत्परारिचिरात्तनः परुत्नम् परारित्नम् दक्षिणापश्चात्पुरसस्त्यण् ॥ ७ ७ ७ ७ ७ ७ ७ ७ ॥

पू॰

सा॰टी॰ नस्यचरणिनोवेतिणत्वम् दक्षिणस्यां भवो दाक्षिणात्यः पाश्चात्यः ॥ ॥ पौरस्त्यः इत्याद्यूह्यम् स्वार्थेपीति अपिशब्दोऽनुक्तसमुच्चयार्थस्तेन श्वेष्ठसिद्धिः चत्वा

सा॰प्र॰ रएववर्णा इति विग्रहे कर्मधारये चतुर्वर्णशब्दात्स्वार्थे ष्यञ् । अणीनयोरिति अणाच ईनश्च अणीनौ तयोः परतः युष्मदस्मदोस्तवकादिः एकत्वे तवकम

५४ मकौ द्वित्वबहुत्वयोर्युष्माकास्माकौ च वक्तव्यावित्यर्थः अनेकवर्णत्वेन गुरुत्वाद्गुरुः शिच्चेति सर्वादेशः वत् स्तृतीयांतात् क्रियातुल्य इति व्याख्येयम् तेन

पुत्रेणतुल्यः स्थूलः गोमान्वा इत्यादौ गुणद्रव्यतुल्ये न केचित्तु तुल्य इति सामान्योक्तेविवक्षितार्थप्रयोगदर्शनात्पुत्रेणतुल्यस्थूल इत्यादावपि अस्तीत्यादि

पौरस्त्यः स्वार्थेपि उक्ताः प्रत्ययाः स्वार्थेपि भवंति देवदत्त एव देवदत्तकः चत्वार एव वर्णाः चातुर्वर्ण्यं चोर एव चौरः भागरूपना

मभ्यो धेयः स्वार्थेपि अणीनयोर्युष्मदस्मदोस्तवकादि आदेशा भवंति तवेदं तावकं ममेदं मामकं तावकीनः मामकीनः यौष्माकः

आस्माकः यौष्माकीणः आस्माकीनः वतु[illegible]सादृश्येऽर्थे वत् प्रत्ययो भवति चंद्रेण तुल्यं चंद्रवत् मुखं घटेन तुल्यं घटवत् उदरं परत्व

तकम्बले भावे तत्वयणः शब्दस्य प्रवृत्तिनिमित्तं भावस्तस्मिन् भावे तत्वयण इत्येते प्रत्यया भवंति ब्राह्मणस्य भावो ब्राह्मणता त्वप्रत्ययो नपुंस

कलिंगो भवति ब्राह्मणत्वं ब्राह्मण्यं सुमनसो भावः सौमनस्यं सुभगस्य भावः सौभाग्यं विदुषो भावः वैदुष्यं समाहारे ता च गुणानां त्रयाणां

समाहारः त्रेता जनानां समूहो जनता देवता कर्मण्यपि यण वक्तव्यः ब्राह्मणस्य कर्म ब्राह्मण्यं राज्ञ इदं कर्म राजन्यं लोहितादेरिमन् ॥

क्रियाध्याहाराद्द्विरिवद्भुज इत्यादाविव वत्प्रत्यये प्यदोषात् तृतीयांतात् क्रियातुल्य इत्यादिविवक्षानेति चंद्र इव घट इव पटस्येवेति प्रथमासप्तमीषष्ठ्यंतादपि राम ५४

वदित्याहुः भावे रतश्च त्वश्च यणाच तेन त्या भवत्यस्माच्छब्दप्रवृत्तिरिति भावशब्दस्यान्वर्थतामभिप्रेत्याह शब्दस्य प्रवृत्तिनिमित्तं भाव इति तच्च चतुष्टयी श

ब्दानां प्रवृत्तिरिति महाभाष्यानुसारात् द्रव्यगुणक्रियाजातिरूपा केचित्तु द्रव्यगुणाः क्रियाजातिरूढयः शब्दहेतव इत्याहुः ब्राह्मणत्वेत्यत्र ब्राह्मणशब्द

प्रवृत्तिनिमित्तं जातिः समाहारे ता चेत्याप्तन्निर्देशात्तस्य नित्यस्त्रीत्वसूचनादाप् समाहारे ता चेति चकारादनुक्तसमुच्चयार्थात् ॥ छ छ छ छ ॥

हस्तिनांसमूहोहास्तिकंधेनुकमित्यादौसमूहेकःतस्यचणिनोवेतिणित्वादादिवृद्धिःतथाअपूपानांसमूहेआपूपिकम्शाष्कुलिकमित्यादावन्नवाचकेभ्यइकण्एवंक
वचिनांसमूहःकावचिकंकेदाराणांसमूहःकैदारिकंकेदारकंकैदार्यमित्यत्रकङ्कण्याःतथाभिक्षादिभ्योऽणाभिक्षाणांसमूहोभैक्षंयौवनम् तथापाशादिभ्योय
त्पाशानांसमूहःपाश्यावात्याखल्यागव्यारथ्यावातात्कूलःवातूलः तथाखलिनीगोत्ररथेभ्यइनित्रकठ्यंत्यादयःखलानांसमूहःखलिनीगोत्रारथकठ्येत्या
दयःप्रयोगतोज्ञेयाःस्त्रीत्वादिकंलोकात्गुणाश्चेतिविशेषार्थाच्चकारात्त्रिशब्दस्यैवगुणाःकर्म्मण्यपीति अपिशब्दात्साध्वर्थेपिसामसुसाधुःसामन्यःकर्म्म
ण्यःनोवेतिशब्दव्यवस्थयाटिलोपाप्रसंगःनाम्नोनोलोपशपशधाविन्यत्रापिह्रस्वोवेत्यतोवानुकर्षणाद्व्यवस्थयात्रनदभावःएवंसभायांसाधुःसभ्यःसमाने
तीर्थेवसतिसतीर्थ्यःसहादेरितिसमानस्यसःसामानेउदरेशयितःसमानोदर्य्यःसोदर्य्यःविकल्पेनसादेशःअग्नादिभ्यईयेययतोभवार्थेअग्नेभवःआग्नियःअ

लोहितादेर्भावेऽर्थेइमनप्रत्ययोभवतिसडिनडित्वाट्टिलोपःलोहितिमाअणोर्भावोअणिमालघोर्भावोलघिमा महतोभा
वोमहिमाऋरइमनि ऋकारस्यरेफोभवतिइमनिपरेप्रथिमाद्रढिमावहोर्भावइतिविग्रहेवहोर्लोपोभूश्चवहोःवहोरुत्तरेषा
मिमनादीनामिकारस्यलोपोभवतिवहोःस्थानेभूश्चादेशःवहोर्भावोभूमा अस्त्यर्थेमतुःनाम्नोमतुप्रत्ययोभवति ॥ ९ ॥

म्यःतथाहितार्थेशरीरावयवाद्यत् दन्तेभ्योहितन्दन्त्यम् कंठ्यंओष्ठ्यमित्यादिशतेनक्रीतःशत्यःइत्यादिप्रयोगानुसारेणोह्यम्णिनोवेतिणित्वव्यवस्था ॥ ॐ ॥
लोहितादेः ३ भावेतत्त्वयणाइत्यनुवर्त्तनेसतिपिततश्चलोहितिमालोहितत्वंलौहित्यमित्याद्यपिऋरइति।वक्तव्यत्वेनप्रयोगानुसारित्वाद्दसादेर्लघोरित्येवनेह
ऋजिमाकृष्णिमावहोरितिइमनादीनामित्यादिशब्देनेष्ठेयसोर्ग्रहणम्पुनर्वहोरितिभूस्थानेनियमार्थम् अन्यथाइमनादीनांप्रकृतत्वात्तेषामेवस्यात्
यद्यपितेषामिकारलोपसामर्थ्यान्नसंभवति तथापिपूर्वस्यपंचस्यन्तत्त्वेनस्थानषष्ठ्यंतस्यपृथगुक्तिर्युक्तैव अतएवादेःपरस्येतिपरिभाषयापरलोपप्रस
क्तौसम्भवदभिप्रायेणोकारेत्युक्तिःततश्चेयानित्यादौइकारस्यापिलोपः अस्त्यर्थे ३ अस्तेरर्थोऽस्त्यर्थःविद्यमानार्थेस्तसि ॥ १ ७ ७ ७ ९ ॥

नावद्इति प्रथमांतपरम् ततश्च प्रथमांतान्नाम्नोऽस्त्युपाधिकान्मतुरित्यर्थः॥ःः॥ अस्यास्मिन्वास्तीत्यर्थः विशेषस्तु वानुवृत्तेरवसेयः गौः श्रीश्चास्यास्मिन्वेति वि
ग्रहे उकारानुबंधित्वान्ङीप् तद्दीपप्रभूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने संसर्गेऽस्तिविवक्षायां भवन्ति मतुवादयः क्रमेणाब्राह्मणावान्ग्रामः उदरिणीक
न्या रूपवान्नटः क्षीरिणो वृक्षाः विद्यावान्नरः दण्डी अस्त्यर्थोदाहरणं चोक्तम् अड्काविति अम्बुड्कश्च अड्कौ संध्यभावोऽसंदेहार्थः एवं प्रज्ञास्यास्ति प्राज्ञः श्राद्धः
आर्थः इति रस्यास्तीति वार्तेद इत्यादौ णीतोवेति व्यवस्थया णित्वम् चकारादनुक्तसमुच्चयार्थान्प्रयोगानुसारेणान्येभ्योपि यथा फलबर्हेरथेभ्य इनः फलमस्यास्तीति
फलिनः बर्हिणः रथिनः तथा वलवाताभ्यां मूलः वलमस्यास्तीति वलूलः वातूलः तथा वातातीसाराभ्यां किन्नरोगे वातो रोगोऽस्यास्तीति वातकी अतीसारकी तथा
कंशंभ्यां वभादयः कंशं वास्यास्तीति कंवः शंवः कंभः शंभः [illegible] शंयुः कंतिः शंतिः कंतुः शंतुः कंतः शंतः तथा तुंदिवलिवटिभ्यो भः तुन्दिनो विद्यतेऽस्मिन तुन्दिभः वलि

अस्यास्मिन्नस्तीत्येतस्मिन्नर्थे उकारो नुम् विधानार्थः द्वितो नुम् गोमान् श्रीमान् गोमती श्रीमती आयुष्मान् अड्कौ मत्वर्थे मत्वर्थे अ
इकौ प्रत्ययौ भवतः वैजयंती पताका अस्य अस्मिन् वा वैजयंतः प्रसादः माया विद्यते अस्यास्मिन् मायिकः मान्तोपधाद्वन्विनौ मकारांता
न्मकारोपधादकारांतादकारोपधाच्च वन्विनौ प्रत्ययौ भवतः अस्त्यर्थे किंवान् लक्ष्मीवान् भगवान् धनी दंडी छत्री दृषद्वती भूमिः शमी कामी॰

भः वटिभः कृष्यादिभ्यो वलः पूर्वस्य च दीर्घः कृषीवलः रजस्वला दंतावलः शिखावलो संज्ञायाम् अन्यत्र दंतवान् शिखावान् तथा मध्वादेरः मधुरः ऊषः
क्षार मृत्तिकास्यास्ति ऊषरः सुषिरः पुष्करः खमुखकुञ्जेभ्यश्च खरः मुखरः कुंजो हस्तिहनुः सोस्यास्ति कुंजरः कच्छूः कंडूः सोस्यास्तीति कच्छुरः अस्य ह्रस्व
त्वम् अर्शसोवः सलोपश्च अर्णांसि जलान्यस्मिन्न र्णवः केशादिभ्योपि प्राशस्त्ये प्रशस्ताः केशाः सन्त्यस्य केशवः तथा कांडांडपोरीरः कांडीरः आंडीरः मेधा
रथाभ्यामिरः मेधिरः रथिरः तथा लोमादिभ्यः शः लोमशः पामादेर्नः पामनः प्रशस्तान्यंगानि संत्यस्या अंगना सिध्मादेर्लः सिध्मलः चंडालः इत्यादयो
॥यथाप्रयोगमूह्याः मान्तोपधात् मश्च अश्च मौ अंते उपधायां च यस्येति ॥ ९ ॥

व्यधिकरणो बहुव्रीहिः वतुप्रत्ययः सामान्येन भवति इत्प्रत्ययस्य वकारान्तादेवेति विवेकः इषद्वानित्यवर्णोपधोदाहरणम् वनोरुकारानुबंधित्वादीप् किंवा
नूलक्ष्मीवानिति मकारान्तमकारोपधयोरुदाहरणे शिनो वेत्यतो मंडूकप्लुतिन्यायेन वानुवृत्तेर्व्यवस्थयायवादेर्न यवमान् भूमिमानित्यादि॥ ॐ॥ तडिता
दिभ्यइति चकारादधिकविधानार्थात्तडितादीनां रूपाणां जवानस्तोर्विसर्ग इत्यत्रापि स्कोराद्योश्चेत्युत्तरसूत्राच्चकारानुवृत्तेर्मत्वर्थीये परे यशस्वानित्यादौ विस
र्गाप्रसंगः एतत्कियतद्भ्य इति एभ्यः परिमाणेऽर्थे वतुप्रत्ययो वक्तव्यः मान्तोपधादित्यनेनैव सिद्धे परिमाणार्थं वचनम् किमइति किमः किरादेशो वक्तव्यः चकारा

तडिदादिभ्यश्च तडित्वान् विद्युत्वान् मरुत्वान् एतत्कियतद्भ्यः परिमाणे वतुः यत्तदोरायत्तदोष्टेरात्वं भवति वतौ परे किमः किर्यश्च किम्
शब्दस्य किरादेशो भवति वतौ परे चकारान्मस्य वकारस्य यकारो भवति कियान् आइश्चैतदो वा वतुप्रत्यये परे एतत्शब्दस्य आइश्इत्येतावा
देशौ भवतः गुरुः शिच्चेति शित्वात्कृत्स्नस्य आ इति गुरुस्तथापि चकारादेतस्यैव टेरकारादेशो भवति नकारान्तस्य यस्मिन्पक्षे इशादेशस्तस्मिन्पक्षे प्र
त्ययस्य वकारस्य यकारादेशो भवति एतावानियान् तुंदादेरिलः तुंदादेरिलप्रत्ययो भवति अस्त्यर्थे तुंदमस्यास्तीति तुंदिलः औन्नत्ये दंतादुरः उ
न्नतादंता यस्य सः दंतुरः श्रद्धादेर्लुः श्रद्धादेर्गणात् लुप्रत्ययो भवति श्रद्धास्यास्तीति श्रद्धालुः दयालुः कृपालुः असमायामेधास्रग्भ्योऽस्त्यर्थे विन् व
क्तव्यः तपोस्यास्तीति तपस्वी मायावी मेधावी स्रग्वी वाचो ग्मिनिः वाग्मी आलाटौ कुत्सितभाषिणि वाचालः वाचाटः ईषदसमाप्तौ कल्पदेश्यदेशी
याः ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः पटुदेश्यः कविदेशीयः प्रशंसायां रूप्यः प्रशस्तो वैयाकरणो वैयाकरणरूप्यः भूतपूर्वे चरट् दृष्टचरः दृष्ट

इत्तो वेस्य यादेशश्चेत्यर्थः यत्किं वा परिमाणमस्येति विग्रहे इयानित्यत्र चकाराद्यः असमायेत्यत्रासः प्रत्ययत्वात्प्रत्ययग्रहणे तदंतस्येति असप्रत्ययांतान्मायादेश्चेत्यर्थः
वाचइति वा चशब्दादस्त्यर्थे ग्मिनिप्रत्ययो वक्तव्यः ग्मिनेर्गकारः जमादित्वव्यावृत्त्यर्थः अथवा वाचो ग्मिनिरिति च्छेदे वाचो मिनिप्रत्ययः वाचश्च गकारोऽन्तादेशश्चेति व
क्तव्यः एवं च वाचइत्यस्योपलक्षणाद्ग्मीत्यादावपि आलाटाविति कुत्सितमनन्वितं भाषितुं शीलमस्य कुत्सितभाषी तस्मिंस्तद्धितांते वाच्ये विवक्षितइत्यर्थः॥ ६ ॥

ईषदपरिसमाप्तिः किंचिन्न्यूनत्वम् प्रशंसा प्राशस्त्यं स्तुतिरिति यावत्पूर्वंभूतः प्राक्षाज्ञातइतियावनूटकारस्यैवर्यैत्वानुदृष्टचरी॥ ॥ प्राचुर्य्येति प्राचुर्य्यञ्चवि
कारश्चप्राधान्यादिश्चेतेतथातेषुवान्येषुवान्त्येषुमयट्प्रत्ययोवक्तव्यइत्यर्थः प्रचुरस्यभावः प्राचुर्य्यंबाहुल्यमित्यर्थः अन्नप्रचुरोऽन्नमयः मृदोविकारोमृन्म
यः स्त्रीप्रधानः जाल्मोऽसमीक्ष्यकारीआदिशब्दानाद्रूप्येऽपितदेवाहः अमृतमयश्चन्द्रइति अमृतरूपइत्यर्थः एवमादिमशब्दादेवगोः पुरीषेमपट्गोमयम् मयट
पित्वादन्नमयीस्थालीत्यादावीपूतत् अधीतेपठतितदेदजानातिवाइत्यर्थे अणवक्तव्यइत्यर्थः व्याकरणाश्वशब्दाभ्यामणित्वान्वृद्धिः प्राप्तावयवादमाहनसंधि

प्राचुर्येविकारप्राधान्यादिषुमयट् अन्नंप्रचुरंयस्मिन्सः अन्नमयः यज्ञः मृन्मयोघटः स्त्रीमयोजाल्मः अमृतमयश्चंद्रः तदधीतेवेदवत्यत्रा
णवक्तव्यः व्याकरणमधीतेवेदवावैयाकरणः शोभनोअश्वः स्वश्वः तंवेदेतिसौवश्वः नसंधिर्य्वोयुट्चसंधिजौय्वौसंधिय्वौतयोः संधिजयोः य
कारवकारयोः संबंधिनः स्वरस्यवृद्धिर्नभवतिकिंतुतत्पूर्वैयुडागमेभवति उट्इट्इत्येनावागमौभवतः वर्णविश्लेषंकृत्वायकारात्पूर्वमिकारः वका
रात्पूर्वमुकारः स्वरहीनंपरेणसंयोज्यं आदिस्वरस्यवृद्धिश्चवृद्धिः वैयाकरणः सौवश्वः इतोजातार्थैलज्जितः पण्डितः तृषितः तरतमेयस्विष्ठाः प्रक
र्षेअतिशयेऽर्थेतरतमईयसुइष्ठइत्येतेप्रत्ययाभवंतिअतिशयेनकृष्णःकृष्णतरः अतिशयेनशुक्लः शुक्लतमः ईयस्विष्ठौडितावितिवक्तव्यौउका
रोनुम्विधानार्थः नसम्महतइतिदीर्घः अतिशयेनलघुः लघीयान् अतिशयेनपापः पापिष्ठः पापीयान् पापीयसीलघिष्ठः लघीयसी॥ १॥

य्वौः ४ संधेः संबंधिनौय्वौसंधिय्वौसंबंधस्तुजन्यजनकभावएवेतिविग्रहाद्व्याचष्टेसंधिजौय्वावित्यादिइश्चउश्चयूटकारोहृद्धंतत्वाद्भाभ्यामन्वेतिअतएवो 
त्वंइट्उट्इत्येतावागमौभवतइतितौचसंधिय्वोरेवयथासंख्यनततश्चव्याकरणेत्यत्रवकारस्यसंधिजत्वाभावाद्यकारवकारयोर्विश्लेषंकृत्वासंधिजाद्यकारात्पूर्वमिकारः
स्वंसकारवकारयोर्विश्लेषंकृत्वावकारात्पूर्वमुकारइत्यर्थः विश्लेषश्चबालबोधार्थंतयोक्तः इकारोकारयोश्चयकारवकारजनकत्वाभावादादिवृद्धिर्भवत्येवनौवत्यतो
वानुवृत्तेर्व्यवस्थयास्वागतस्वध्वरस्वंगव्यंगव्यवहारव्यायामप्रभृतीनांननिषेधः पुटौद्वारादीनांचसंधिजत्वाभावेऽपिनिषेधयुटौदौवारिकः॥ १ ७ १ ७ १॥

सौवस्तिकः नैयंग्रोधः वैयासकिरित्यादि इनतइति अस्यजातमित्यर्थे इतप्रत्ययोवक्तव्य इत्यर्थः लज्जाजाताऽस्यलज्जितः एवंनारकितन्नभः पल्लवितो
वृक्षइत्यादि ज्ञेयम् तरतमे २ तरप्रतमपौईयसुप्रौइष्ठप्रेनतयाप्रकर्षोऽतिशयः अतिशयेनकृष्णः शीतोवेत्यतोवानुवृत्तेर्व्यवस्थयापाचकतरः पाचकतम
इत्यादौतरतमावेवनेयस्विष्ठौ ॥ ३ ॥ गुर्वादेरिति अतिशयेनप्रियःप्रेष्ठः प्रियस्यभावःप्रेमाप्रियस्यप्रादेशः स्थूलस्यस्थवादेशः अतिशयेनस्थिरःस्थेयान्स्थे
ष्ठःस्थेमास्फिरःस्फेष्ठःस्फेयानउरुःवरिष्ठःवरीयान्‌वरिमावहुलःवंहिष्ठःवंहीयान्वंहिमावृद्धःवर्षिष्ठःवर्षीयान्तृप्रः त्रपिष्ठःत्रपीयान्वृन्दारकःवृन्दि

गुर्वादेरिष्ठेमनीयस्सुगरादिष्विलोपश्चगुरुप्रियस्थिरस्फिरउरुवहुलवृद्धदीर्घप्रशस्यबाढयुवन् अल्पस्थूलदूरअंतिकानांक्रमेणग
रप्रस्थस्फवरवंहिज्याद्राघश्रसाधयवकनस्थवदवनेदएते आदेशाभवंति अतिशयेनगुरुःगरीयान्गरिष्ठःगुरोर्भावोगरिमाअतिश
येनप्रियःप्रेयान्प्रेष्ठःप्रेमा अतिशयेनस्थिरःस्थेयानस्थेष्ठः अतिशयेनउरुःवरीयानवरिष्ठः अतिशयेनस्फिरःस्फेयान् २ अतिशयेनव
हुलःवंहीयान् अतिशयेनवृद्धःइलोपोज्यावृद्धादीयसःवृद्धस्यज्यो ज्यायान्ज्येष्ठः अतिशयेनदीर्घःद्राघीयानद्राघिष्ठःद्राघीयसीद्राघिमाप्र
शस्यस्यश्रादेशः इष्ठस्येकारस्यइर्भवति अतिशयेनप्रशस्यःश्रेयान्श्रेष्ठः ईयसइलोपःभूयानभूयसीदूरस्यदवादेशःदविष्ठःदवीयानदवी
यसीक्षिप्रशब्दस्यक्षेपादेशःक्षेपिष्ठःक्षेपीयानक्षुद्रशब्दस्यक्षोदादेशःक्षोदीयान् वहोरिष्ठेयिःवहोरुत्तरस्येष्ठप्रत्ययस्येकारस्ययिर्भवतिव
होःस्थानेभू आदेशःभूमाकिमोत्ययादाख्यातात्तरतमयोरामुवक्तव्यः कुत्तरांपरमाणवःकुतस्तेषामारम्भकत्वम् ॥ ४ ष्ठः वृन्दीयान् दूरःदविष्ठः

दवीयान्युवापविष्ठःयवीयान्ह्रस्वःह्रसिष्ठःह्रसीयान्ह्रसिमाक्षिप्रःक्षपीयानक्षेपिष्ठःक्षेपीयान्क्षेपिमाक्षुद्रःक्षोदिष्ठःक्षोदीयान्क्षोदिमाअन्तिकःनेदीयान्नेदिष्ठःबा
ढःसाधीयानसाधिष्ठःयुवाल्पयोःकनवाकनिष्ठःकनीयान् इत्यादयोयथाप्रयोगंज्ञेयाः इलोपइति प्रशस्यवृद्धयोर्ज्यादेशःतस्माज्ज्याशब्दादीयसईकारस्यलोपोवक्त
व्यइत्यर्थः प्रशस्यस्यश्रादेशः वहोरितिवहोर्लोपोभूश्चवहोरितिइष्ठकारलोपेवहोर्भूरादेशयदादेशन्यायेनएकदेशविकृतन्यायेनचवहोरितिइष्ठप्रत्ययेपरेवहुशब्दा

प.
सा-टी
ता-प
५७

अथवाद्दष्टस्येविरिष्टेइतिसांकेतिकंप्रथमांनम् ततश्चबहुशब्दात्परोयइष्टेकारःसयिर्भवतियद्वाइष्टेइतिस्थानसप्तम्यामपिआदेशेप्राप्तेआदेःपरस्येतिपरि
भाषयाइकारस्यापिआदेशःकेचित्तुबहुशब्दात्परेइष्टप्रत्ययेयईकारःसपकारयुक्तोवक्तव्यइत्याहुःकिमोऽव्ययादितिएभ्यःपरयोस्तरतमयोरित्यर्थःव
कव्यात्वाद्द्रव्यप्रकर्षएवनेहाऽऽःउच्चैस्तरस्तरुःएषांसद्भावेप्रमाणाभावान्नदारंभकत्वेनाभिमताःपरमाणवोतिशयेनकुतःएवंपरमाणूनामसत्वात्तेषांप्र

उच्चैस्तरांगायतिपठतितमांपचतितमां अव्ययसर्वनाम्नामकच्प्राक्टेःउच्चकैःपकःसकःसर्वकःपरिमाणेदघ्नादयःपरिमा
णार्थेद्घ्नट्द्वयसट्मात्रट्इत्येतेप्रत्यया भवंति जानुदघ्नंजलंशिरोद्वयसंपुरुषमात्रंद्वयोर्वहूनांचैकस्यनिर्द्धारणेकिमादिभ्योडत
रडतमौवक्तव्यौकतरोभवतो काएवःकतमोभवतांत्रिकःभवतोर्यतरस्मात्किंकस्तरउहल्लात्तु संख्येयविशेषावधारणेद्वित्रिभ्यांती
यःद्वयोःसंख्यापूरकःद्वितीयःत्रयाणांसंख्यापूरकःतृतीयःत्रेःसंप्रसारणंषट्चतुरोस्थट्षष्ठःचतुर्थःपंचादेर्मट्पंचमःसप्तमःअष्ट
मःनवमःविंशत्यादेर्वातमट्विंशतितमःविंशतिःविंशतेस्तिलोपाडितिविंशःत्रिंशतमःशतादेर्नित्यंशततमःएकादशादेर्डट्एकाद
शःद्विव्यष्टानांद्वात्रयोष्टाःद्वादशःत्रयोदशःअष्टादशःकतिकतिपयाभ्यांथःकतिथःकतिपयथःसंख्यायाःप्रकारेधाद्विप्रकारंद्वि
धाचतुर्धागुणेअण्चद्वेधात्रेधाणित्वाद्वृद्धिःयस्यलोपःअनोमद्वैधंत्रैधंक्रियायाआवृत्तौकृत्वसुपंचकृत्वःसप्तकृत्वःद्वित्रिभ्यांसुःद्विःत्रिःच
कंबह्वादेःशसबहुशःशतशःतयायटौसंख्यायेयेनतयंतृतयंद्वयंत्रयंशेषानिपाताःकत्यादयःकासंख्यायेषांतेकति॥इतितद्धितप्रक्रियास राम ५७

थित्वादिचतुष्टयारंभकत्वमप्यतिशयेनकुतइत्यर्थःपरिमाणेइति दघ्नद्वयसमात्रादयःतत्रदघ्नद्वयसावूर्द्ध्वमानेमात्रस्त्वविशेषेणआदिशब्दात्पुरुष
हस्तिभ्यामेतेऽण्चपुरुषःप्रमाणमस्यपौरुषंनोवेतितच्छब्दव्यवस्थयाटिलोपाभावेहस्तीप्रमाणमस्यहास्तिनम् पक्षेपुरुषमात्रमित्यादिद्वयोर्मध्ये
एकस्यनिर्द्धारणेक्रियामाणेकिमादिभ्यःकिंयतद्भ्योडतरःएवंवहूनांमध्येनिर्द्धारणेडतमइत्यर्थः काण्वः काण्वः श्रावीयः तांत्रिकः॥ ६ ७ ६॥

शास्त्रज्ञः तर्के कुशलस्तार्किकः उद्धृत्यात्तु स्वसिद्धांतावलंबेन प्रथममुपन्यस्यत्वित्यर्थः संख्येयविशेषेति संख्यातुमर्हं संख्येयं तस्य विशेषः तत्पूरकस्तस्या
वधारणादित्यर्थः द्वयोस्संख्ययोः पूरकः संप्रसारणं सवर्णस्यारेफस्य ऋकारः षट्कतुरोरिति षष् चतुर् शब्दाभ्यां संख्येयविशेषावधारणे थट् प्रत्ययो व
क्तव्यः षण्णां चतुर्णां संख्यापूरणादिति विग्रहे षष्ठ चतुर्थमास्मात्तादौ डत्वनिषेधार्थमित्यत्रापि पविधानसामर्थ्यात्षोडदिति डत्वाप्रसंगः स्तोर्विसर्ग इत्यत्र ह्र
स्वोवेत्यतो मण्डूकप्लुतिन्यायेन वानुवृत्तेर्व्यवस्थ[illegible] विसर्गाप्रसंगः पंचादेरिति संख्येयविशेषावधारणे इति सर्वत्रानुवर्तते पंचादेर्दशपर्यंतान्म
प्रत्ययः सप्तमः अष्टमः नवमः दशमः एकादशादे[illegible]तनोदेक शब्दस्य दशशब्दे परे आत्वं एवं द्वादशेत्यादौ द्वित्र्यष्टानां समासे सहादेः सादिरि
ति द्वात्रयोदशः अशनादनवतेः सुः द्वाविंशः त्रयोविंश[illegible]त्रिंशत्त्रयस्त्रिंशत् चत्वारिंशदादौ वा द्विचत्वारिंशत् द्वाचत्वारिंशदित्यादि यद्यप्येकादश
द्व्यादौ डित्वं विनापि नो वेति टिलोपः संभवति तथापि विं[illegible]त्यादौ यस्य लोपे कृते ऽल्लोपार्थे डित्वमिति संधेयम् विंशादित्यत्र वाशब्दाल्लोकाद्वाति लोपे
डित्वादल्लोपः गुणोण् चेति धा प्रत्यये परे गुणो भवति गुणाविधिसाम[illegible]ध्यच्चकाराद्वा गुणाभावपक्षे धाप्रत्ययांतात् दण् चकारो विकल्पार्थः क्रियायाआवृ
त्तौ क्रियाभ्यावृत्तिगणने संख्याया वा च कान्कृत्वसुच् वक्तव्य इत्यर्थः पंच[illegible]नीति पंचकृत्वः द्वित्रिभ्यां सुरित्यत्रापि क्रियावृत्तावित्येव वह्वादेरिति बह्वादेः
कारकादित्यर्थस्तेन बहूनां स्वामीत्यादौ न अत्रापि क्रि[illegible]भ्यावृत्तिगणन एव भूरिशः गणशः स्तोकशः अल्पशः अनेकश इत्यादि तयायपटाविति तप
अयट् चैतौ संख्याया अवयववत्त्वविवक्षायां भवत इत्यर्थः [illegible]अवयवौ त्रयो वाऽवयवा इति विग्रहः द्वितयी त्रितयीत्यत्र न ह्रादित्वादीप् द्वयी त्रयी
त्यत्रायटष्ठित्वात् ष्ठित इतीप् केचित्तु तयायपटौ इति पठित्वा डित्वाट्टिलोपेन दादित्व[illegible]देवेप इत्याहुः तदसत् यस्येति लोपेनैव सिद्धे डित्ववैयर्थ्यप्रसंगा
त् तद्धितप्रत्ययान्नाम नेतत्वात्कान्तस्मैनाभिधातुमशक्यत्वादनु[illegible]यत्स्य नाह शेषादिति निपातात्साधवो निपात्याः किमस्संख्यापरिप्रश्ने ड
तिः कासंख्येयानां कति एवं यति तति इत्यादि प्रयोगादूह्यम् ॥ [illegible] श्रीभट्टवासुदेवविरचिते सारस्वतप्रसादे तद्धितप्रक्रिया समाप्ता ॥ शुभमस्तु
॥ श्री सम्वत् १९४० मी· आषाढकृष्ण २३ बारमंगल श्रीरामचंद्राय नमः ॥ श्रीराम ॥

इतिश्रीसारस्वतप्रसादसंयुक्तपूर्वार्द्धःसमाप्तः